TRIVANDRUM SANSKRIT SERIES.

NO. VIII.



रविवर्मभूपविरचितं

# प्रद्युम्नाभ्युदयम् ।

THE

# PRADYUMNÂBHYUDAYA

OF

RAVI VARMABHÛPA.

Edited with Notes

BY

T. GAṆAPATI ŚÂSTRÎ

*Curator of the Department for the publication of Sanskrit manuscripts,*

TRIVANDRUM.

PUBLISHED UNDER THE AUTHORITY OF THE GOVERNMENT OF HIS HIGHNESS THE MAHARAJAH OF TRAVANCORE.

TRIVANDRUM:

PRINTED AT THE TRAVANCORE GOVERNMENT PRESS

1910.

TRIVANDRUM SANSKRIT SERIES.

NO. VIII.

रविवर्मभूपविरचितं

# प्रद्युम्नाभ्युदयम् ।

THE

# PRADYUMNÂBHYUDAYA

OF

## RAVI VARMABHÛPA.

Edited with Notes

BY

T. GAṆAPATI ŚÂSTRÎ

*Curator of the Department for the publication of Sanskrit manuscripts,*

TRIVANDRUM.

---

PUBLISHED UNDER THE AUTHORITY OF THE GOVERNMENT OF HIS HIGHNESS THE MAHARAJAH OF TRAVANCORE.

---

TRIVANDRUM:

PRINTED AT THE TRAVANCORE GOVERNMENT PRESS

1910.

TRIVANDRUM SANSKRIT SERIES.

NO. VIII.

# THE PRADYUMNÂBHYUDAYA

OF

# RAVI VARMABHÛPA.




Edited with Notes

BY

T. GAṆAPATI ŚÂSTRÎ

*Curator of the Department for the publication of Sanskrit manuscripts,*

TRIVANDRUM.

---

PUBLISHED UNDER THE AUTHORITY OF THE GOVERNMENT OF HIS HIGHNESS THE MAHARAJAH OF TRAVANCORE.

---

TRIVANDRUM:

PRINTED AT THE TRAVANCORE GOVERNMENT PRESS

1910.

---

॥ श्रीः ॥

अनन्तशयनसंस्कृतग्रन्थावलिः

ग्रन्थाङ्कः ८.



# प्रद्युम्नाभ्युदयं

रविवर्मभूपेन

विरचितं



संस्कृतग्रन्थप्रकाशनकार्याध्यक्षेण

त. गणपतिशास्त्रिणा

संशोधितं

लघुटिप्पण्या च संयोजितम् ।



तच्च

अनन्तशयने

महामहिमश्रीमूलकरामवर्मकुलशेखरमहाराजशासनेन

राजकीयमुद्रणयन्त्रालये

मुद्रयित्वा प्रकाशितम् ।



कोळम्बाब्दाः १०८५, क्रैस्ताब्दाः १९१०.

# PREFACE.

Four manuscripts were examined in bringing out the present edition of Pradyumnâbhyudaya. They were obtained from the Palace Library and are between two and three hundred years old. Sanskrit renderings for the Prakrit passages of the text are not given in any of them. The manuscripts are referred to in the foot-notes as क, ख, ग and घ. The last one घ is an incomplete manuscript.

The story of the drama relates to the exploits — famous in legends — of Pradyumna, son of Srikrishna. The portions of the story comprised in each act of the play are detailed in the table of contents.

By its variety of expression and elegance of stlye, its pure diction and choice vocabulary, this drama should, I think, in no way be classed as inferior to Nâgânanda of Srî-Harsha and other similar works. It is not surprising that this drama is not known as it deserves even in the land of its birth — not to speak of its publicity abroad — when we remember that many are the rare poetical gems like Tapatî-samvarana that have been allowed to lie buried even in their native country of Kerala.

The author Ravivarma Deva *alias* Sangrâma Dhîra and king of Kolambapura is described in the prelude to the drama as the son of Jayasimha of the family of Yadus and descendant of the Lunar race. He is also stated to be well-versed in music and poetry. The prelude also discloses that our author is a devotee of Padmanâbha from the statement that he wishes the play to be enacted at the यात्रोत्सव or festival of Padmanâbha and the description of Padmanâbha as यादव-



Samudrabandha,[1] the author of a commentary on Alankârasarvasva states that his work[2] is based on the commentary of that work as propounded by Ravivarma Deva at the request of the Pandits at his court, thus :—

"कदाचिन्मङ्खुकोपज्ञं काव्यालङ्कारलक्षणम् ।
प्रदर्श्य रविवर्माणं प्रार्थयन्त विपश्चितः ॥
गम्भीरं नस्तितीर्षूणां मङ्खुकग्रन्थसागरम् ।
नौरस्तु भवतः प्रज्ञा स्थेयसी यदुनन्दन ! ॥

..........................................

इत्युक्तैष मनीषावैभवपरिभूतवासवाचार्यः ।
बुधपरिषदलङ्कारो व्याख्यदलङ्कारसर्वस्वम् ॥
अवधृत्यै यदुपतिना विवृतस्य गरीयसस्तदर्थस्य ।
कश्चिद् व्यधित विपश्चिच्छब्दनिबन्धं समुद्रबन्धाख्यः" ॥

In illustrating the Alankâras, Samudrabandha eulogises Ravivarma Deva and in so doing largely uses the same epithets as those by which our author is described in the present work, thus :—

"यद्याकाङ्क्षसि वीक्षितुं गुणरुचे ! चेतः ! समस्तान् गुणान्
कोलम्बाख्यमुपेहि दक्षिणदिशासीमन्तरत्नं पुरम् ।
आस्ते यत्र भुजेन कीर्तिशशिनः पूर्वाचलेनोद्वहन्
उर्वीमर्णवमेखलां यदुपतिः कल्पद्रुमो जङ्गमः ॥
अर्जुनगुणानुरागी रक्षितगोमण्डलो बलज्येष्ठः ।
यदुपतिरभिमतसत्यः शरदयुतं जयति विबुधहितानिरतः ॥
सङ्ग्रामधीरनृपतिर्भीरुरधर्मादभीरुराहवतः ।
शुश्रूषुर्निगमविदस्तद्वाह्यविदो भवत्यशुश्रूषुः" ॥

---

1. Simharâja, the author of Prâkrita Rûpâvatâra, which, I understand, is in course of publication by Professor Hultzch, calls himself the son of Samudrabandha Yajvan. It is probable, from the rarity of these names समुद्रबन्ध and समुद्रबन्धयज्वन्, that they refer to the same person and that Samudrabandha got the title of Yajvan after he compiled the commentary on Alankârasarvasva.

2. There is a palm-leaf manuscript of this work about 300 years old in the

Thus it is evident that our author and the Ravivarma Deva referred to by Samudrabandha are identical and that his fame was made the subject matter of a poet's song. In illustrating रशनोपमा (a figure of speech in Sanskrit rhetoric) Samudrabandha addresses the king as कूपकभूपतिः—

"वपुरिव मधुरं वचः प्रसन्नं वच इव कूपकभूपते! मनस्ते" ।

That this epithet is also in reference to our author is evident from the following slokas in Sukasandesa:—

"कूले भान्तीमथ कुलपुरीं कूपकाधीश्वराणां
लक्ष्मीसाक्षात्कृतिसमुचिते पश्य रत्नाकरस्य ।
भूयोऽप्यात्मप्रमथनभिया तेन विश्वोपभोग्ये
न्यस्तेवास्मिन्नुदरकुहराद् या पुरां रत्नभूता ॥ ५४ ॥

........ ........ ........ ........

लोकत्रय्यामखिलतनुभृल्लोचनैकावलम्बे
कोलम्बेऽस्मिन् क्वचन भवतः कोऽपि मा भूद् विलम्बः ।
अल्पीयस्यामपि परिचितावन्यदेशातिशायि-
न्याश्चर्याणामहमहमिका कस्य कर्षेन्न चेतः ॥ ५६ ॥
अग्रे सिन्धुद्वयमथ पुरी काप्यमीषाममुष्यां
केलीलास्यस्मरणगुरुभिः केतुलोलैर्दुकूलैः ।
व्यङ्ग्योत्तंसैरिव रसविदः सत्कवीनां प्रबन्धैः
प्रीतिर्मन्ये मनसि भवतः स्फीततामेष्यतीति ॥ ५७ ॥
अर्हद्भ्यो यः स्वमिह विभजन्नाश्रमाणां चतुर्णा-
मग्र्यं धर्मं कथयति नृणां कर्मणा केवलेन ।
वन्द्यश्छन्दोरहसि विहरन् वल्लभग्रामवासी
केशिध्वंसी निजपदजुषां क्लेशहन्ता स देवः" ॥ ५८ ॥

which show that Kolamba is the capital of the country of Kûpaka; and that the town of Kolamba is none other than the modern Kollam or Quilon is clear from its being described as situated north of Trivandrum and south of Srîvallabha or

There are three inscriptions in which reference is made to king Ravivarma of Kerala. All these have been reproduced in the Epigraphia Indica, two by Professor Kielhorn (Vol. IV pp. 145-152) and one by Professor Hultzch (Vol. VIII pp. 8-9). The first is taken from a wall in the Vaishnava temple of Arulâlaperumâl in Conjeevaram and runs as follows :—

"स्वस्ति श्रीजयसिंह इत्यभिहितः सोमान्वयोत्तंसको
राजासीदिह केरलेषु विषये नाथो यदुक्ष्माभृताम् ।
जातोऽस्माद्रविवर्म्मभूपतिरुमादेव्यां कुमारः शिवाद्
देहव्याप्य (११८८) शकाब्दभाजि समये देहीव वीरो रसः ॥
क्षयं नीत्वा सोऽयं कलिबलमिवारातिनिवहान्
जयश्रीवत् कृत्वा निजसहचरीं पाण्ड्यतनयाम् ।
त्रयस्त्रिंशद्वर्षो यश इव ययौ केरलपदं
ररक्ष स्वं राष्ट्रं नगरमिव कोलम्बमधिपः ॥
जित्वा सङ्ग्रामधीरो नृपतिरधिरणं विद्विषं वीरपाण्ड्यं
कृत्वासौ पाण्ड्यचोलान् नय इव तनुमान् केरलेभ्योऽप्यधीनान् ।
षट्चत्वारिंशदब्दस्तटभुवि मकुटं धारयन् वेगवत्याः
क्रीडां सिंहासनस्थश्चिरमकृत महीकीर्तिवाणीरमाभिः ॥
कृत्वा केरलचोलपाण्ड्यविजयं क्लृप्ताभिषेकोत्सवः
सङ्ग्रामापजयेन कोङ्कणगतं तं वीरपाण्ड्यं रिपुम् ।
नीत्वा स्फीतबलं ततोऽपि विपिनं नीत्वा दिशामुत्तरां
काञ्च्यामत्र चतुर्थमब्द(?)मलिखत् सङ्ग्रामधीरो नृपः ॥
आमेरोरा मलयादा पूर्वादा च पश्चिमादचलात् ।
यदुकुलशेखर एष क्षोणीं कुलशेखरः स्वयं बुभुजे ॥

स्वस्तिश्री-चन्द्रकुलमङ्गलप्रदीप-यादवनारायण-केरलदेशपुण्यपरिणाम-नामान्तरकर्ण--कूपकसार्वभौम--कुलशिखरिप्रतिष्ठापितगरुडध्वज--कोलम्बपुरवराधीश्वर-श्रीपद्मनाभपदकमलपरमाराधक-प्रणतराजप्रतिष्ठाचार्य-विमतराजबन्दीकार-धर्मतरु-मूलकन्द-सद्गुणालङ्कार-चतुष्षष्टिकलावल्लभ-दक्षिणभोजराज-सङ्ग्रामधीर-महाराजाधिराज-परमेश्वर-जयसिंहदेवनन्दन-रविवर्ममहाराज-श्रीकुलशेखर-त्रिभुवनचक्र-

கோனேரின்மை கொண்டான் காஞ்சிபுரத்தில் திருவத்தியூரில் நின்றருளிய அருளாளப்பெருமாள் கோயில் திருப்படி ஸ்ரீவைஷ்ணவர்களுக்கு பெருமாள் அருளாளப்பெருமாளுக்கு நம்பேரால் கட்டின குலசேகரன் சந்திக்கு அமுதுபடி சாத்துப்படி உள்ளிட்ட பலவெஞ்சனத்துக்கும் ஆவணி மாதத்து எழுந்தருள நம்பேரால் கண்ட திருநாளுக்கும் திங்கள் திருநாளுக்கும் அமுதுபடி சாத்துப்படி உள்ளிட்ட வெஞ்சனத்துக்கும் திருக்கொடை"

The second is from the famous pagoda at Srirangam an runs thus:—

"स्वस्ति श्रीजयसिंह इत्यभिहितः............... ॥

क्षयं नीत्वा सोऽयं................................ ॥

जित्वा सङ्ग्रामधीरो............................ ॥

आमेरोरा मलयात् ................................ ॥

स्वस्ति श्री चन्द्रकुलमङ्गलप्रदीप...........श्रीकुलशेखरदेवः ।

कृत्वा दुर्नयवैरिनैर्ऋतशमं संस्कारसंशोभिते
निद्राणामधिदेवतां निरुपमैरभ्यर्च्य माल्यादिभिः ।
धर्मैरन्तरधिष्ठिते सहृदयैः सङ्ग्रामधीरः कृती
रङ्गेऽस्मिन् सुमनोधिवासमकरोल्लास्ये नियोज्य त्रयीम् ॥

लब्धा सागरनेमिभूमिविषया रन्तुं प्रतिष्ठा यत-
स्तस्मै श्रीकुलशेखरो यदुपतिस्त्रिक्षत्रचूडामणिः ।
रङ्गेऽस्मिन् कमलासखाय हरये रम्यां प्रतिष्ठां ददौ
सन्तः प्रत्युपकुर्वते ह्युपकृताः सर्वे किमत्राद्भुतम् ॥

भूपालैरिलकार्तवीर्यसगरैर्यः पूर्वमासीत् कृतः
पश्चात् प्रौढतमोहरं यदुपतिस्तं भद्रदीपोत्सवम् ।
चक्रे शक्र इवाश्रयः सुमनसां सम्राट् त्रयीधर्मविद्
रङ्गेऽस्मिन् रुचिराङ्कसंश्रितरमारोचिष्णवे विष्णवे ॥

सम्राजामिव यः सतां समुदभूत् तैस्तैर्गुणैर्मातृका
सैषः श्रीकुलशेखरः शतभिषक्तारे सकन्यारवौ ।
भट्टेभ्यः पुरतोऽत्र रङ्गनृपतेः पञ्चाशते(?) साक्षिणः

कविभूषणस्य

स्वस्ति कुर्मस्त्रयीधर्मवर्मणे रविवर्मणे ।
रणकर्मस्थिताधर्म+र्म+रातिशर्मणे ॥

दुर्बलस्य बलं राजेत्येषा सत्या सरस्वती ।
सङ्ग्रामधीरो धर्मस्य दुर्बलस्य बलं कलौ ॥

रविश्च रविवर्मा च द्वाविमौ तेजसां निधी ।
एकस्याहि प्रतापश्रीरपरस्य त्वहर्निशम् ॥

कृष्णश्च रविवर्मा च यदुवंशोद्भवावुभौ ।
एको गोपवधूजारः स्वदारैकपरोऽपरः ॥

राज्याभिषेककामानां रविवर्ममहीपते ! ।
पुष्पाभिषेको भूपानां त्वत्पदाम्भोजधारणम् ॥

गुरुकल्पद्रुमेन्द्राढ्यां द्यां करोषि रवे ! महीम् ।
ज्ञाता दाता सतां पाता महतां किं न दुष्करम् ॥

सङ्ग्रामधीर ! त्वद्राज्यं चोरो नास्तीति वाङ् मृषा ।
चम्पकद्युतिसर्वस्वचोरस्ते विग्रहः स्वयम् ॥

दृष्ट्वा दक्षिणभोज ! त्वां परं बिभ्यति तद्वरम् ।
परदारानपि द्रष्टुं बिभेषि त्वं हि सर्वदा ॥

एकः स्वादु न भुञ्जीतेत्येतत् किं न श्रुतं वचः ।
एकः स्वादु जगत् सर्वं भुङ्क्ते यादवभूपते ! ॥

कथं दक्षिणभोज ! त्वां ब्रुवते बुद्धिमद्वरम् ।
दत्तं सञ्चः सदा पश्चाद् वित्तं यत्तन्न बुद्ध्यसे ॥

रिपूनेको जयामीति रणे मा दृप्य यादव ! ।
बाहुः खड्गो मनो वाजी सहायाः किं न सन्ति ते ॥

प्रायो न दोषः स्त्रीहत्या राज्ञां रामसधर्मिणाम् ।
सतां सहचरीं हंसि रविवर्मन् ! दरिद्रताम् ॥

धनं सर्वं ददामीति कथं ते यादव ! व्रतम् ।
ब्रह्माण्डभाण्डागारेऽस्मिन् सञ्चिनोषि यशोधनम् ॥

सेव्यस्तैस्तैर्गुणैरेव सेवितुं यद्ददासि नः ।

कुलशेखरभूपाल! सिंहासनं जुषत्वयम् ।
सिंहासनजुषो लोके स्थावरा एव भूभृतः ॥
सङ्ग्रामधीर इत्येतं मन्त्रं पञ्चाक्षरं बुधाः ।
जपन्तो दुर्गतिं जित्वा प्राप्नुवन्ति परं शिवम् ॥
इति यादवकीर्तीन्दोः कलाः षोडशसूक्तयः ।
उल्लासयन्तु कुमुदं भूषणे पर्वणि स्फुटाः ॥
अतसीचम्पकवर्णौ तुलसीकीर्तिसुरभीकृतस्वाङ्गौ ।
यदुनाथौ नाथौ नः कृतमपरैश्चित्तदेवनरदेवैः ॥
कविभूषणस्य"

The third is from the Saivait temple of Vîrastâneswara in the village of Thiruvadi (near Panrutti, South Arcot District) and is as follows:—

"स्वस्ति श्रीजयसिंह इत्यभिहितः ........... ॥
क्षयं नीत्वा सोऽयं .... .... .... .... .... ॥
जित्वा सङ्ग्रामधीरो .... .... .... .... ॥
आ मेरोरा मलयात् .... .... .... .... ॥
स्वस्ति श्रीचन्द्रकुलमङ्गलप्रदीप............श्रीकुलशेखरदेवः ।

இவற்க்கு யாண்டு நாலாவது கலியுக வருஷம் 4414 இதில் நீங்கிய ச ...... 35 இதன் மேல் செல்லானின்ற மகர நாயற்று பூரு வபக்ஷத்து ஏகாதசியும் சனிக்கிழமையும் பெற்ற ரோசணி நாள் திருவதிகையுடயாற் திருவீரட்டானம் உடய நாயனாற் கோயில் வாணகையிலாயத் திருமலை ஸ்தூபிபர்யந்தமாக திருமஞ்சனமும் பண்ணி புரச்சரணத் திருக்கல்லும் சாற்றியருளிநாற் ரவிவர்ம மகாராஜன் பெருமாள் குலசேகர தேவற்

स्वस्ति श्री"

From the attributes regarding family, parentage etc. given in these inscriptions, it being evident that the Ravivarma therein mentioned is none other than the author of Pradyumnâbhyudaya, these inscriptions further reveal the achievements of our author such as the conquest of the Pandya

**Dhîra *i. e.* the brave in battle — his coronation at Conjeevaram etc.**

It is a matter of extreme gratification to us who have not till now heard of any king of Kerala whose fame has spread to foreign lands that we are at present in a position to announce with certainty that king Ravivarma of Kolamba born in Saka 1188 (A. D. 1265) in the country of Kerala was renowned for his conquest of the countries as far as Conjeevaram, no less than for his matchless skill as a poet. Furthermore, from the similarity of the references regarding the Yadava family and devotion to Srî Padmanâbha, we can also state that king Ravivarma might, in all probability have been an ancestor of His Most Gracious Highness the present Maharaja of Travancore.

T. Ganapati Sâstrî.

# निवेदना।

अस्य **प्रद्युम्नाभ्युदयस्य** संशोधनाधारतया चत्वार आदर्शा द्वित्रशतवर्षवृद्धा राजकीयग्रन्थशालाया आसादिताः। क-ख-ग-घ-चिह्नितेषु तेषु घ-संज्ञ एकोऽसमग्रः। प्राकृतस्यच्छाया तु नैकस्मिन्नप्यादर्शे दृष्टा।

अत्र श्रीकृष्णसूनोः प्रद्युम्नस्याभ्युदयलक्षणमितिहासप्रसिद्धं कथावस्तु प्रतिपाद्यं, यस्य प्रत्यङ्कस्था विभागाः पृथक् सूचिकायामावेदिताः।

ग्रन्थोऽयं भणितिवैचित्र्यस्य वृत्तिसौष्ठवस्य पदवाक्यपरिशुद्धेश्च पर्यालोचनायां **नागानन्दा**देर्नाटकस्य नाधस्ताद् मन्ये भवितुमर्हति। नाटकमिदमीदृशमपि न केवलं देशान्तरेषु, स्वाभिजनदेशेऽपि न प्रथत इति नैतदद्भुतं, यस्मादितोऽपि बहुतरगुणोज्ज्वलं **तपतीसंवरणा**दिकं केरलदेशप्रभवं काव्यरत्नजातं स्वाभिजने स्वपित्येव केवलमद्यापि।

अस्य नाटकस्य प्रणेता **कोलम्बपुरेश्वरश्चन्द्रवंश्यो** यदुकुलजन्मा सङ्गीतसाहित्यविद्याविचक्षणो **जयसिंहसूनुः सङ्ग्रामधीरापरनामा श्रीरविवर्मदेव** इति प्रस्तावनायां वर्णितम्। तत्र स्वप्रणीतस्य रूपकस्य श्रीपद्मनाभयात्रोत्सवे प्रयोगं शंसता पद्मनाभं च 'यादवनृपकुलदैवतस्य' इति विशिंषता कविना पद्मनाभभक्तत्वमप्यात्मन आविष्कृतम्। अस्ति **समुद्रबन्ध**नाम्ना[1] विदुषा कृता काचिद् **अलङ्कारसर्वस्वस्य** व्याख्या, यस्यास्तालपत्रात्मक एक आदर्श उपत्रिशतवर्षवृद्धो राजकीयग्रन्थशालायामुपलभ्यते। ग्रन्थोऽयं **सङ्ग्रामधीरापरपर्यायेण कोलम्बपतिना रविवर्मदेवेन** स्वसभासदभ्यर्थितेन व्याख्यातस्यैवालङ्कारसर्वस्वार्थस्य प्रतिपादक इति **समुद्रबन्धो** वक्ति। यथा—

> "कदाचिन्मङ्खुकोपज्ञं काव्यालङ्कारलक्षणम्।
> प्रदर्श्य **रविवर्माणं** प्रार्थयन्त विपश्चितः॥
> गम्भीरं नस्तितीर्षूणां मङ्खुकग्रन्थसागरम्।
> नौरस्तु भवतः प्रज्ञा स्थेयसी यदुनन्दन!॥

---

१. प्राकृतरूपावतारग्रन्थस्यान्ते तत्कर्ता **सिंहराज** आत्मानं **समुद्रबन्धयज्वसूनुं** वक्ति। नामापूर्वत्वात् स एवायं समुद्रबन्धः कदाचिद् भवेत्। यज्वत्वं चालङ्कारसर्वस्वव्याख्यानरचनोत्तरकालसिद्धं स्यात्। प्राकृतरूपावतारं तु इ. **हुल्ष**नाम्ना जर्मनिदेशोद्भवेन पण्डितमहाशयेन संशोध्य प्रकाश्यमानमधुना जानीमः,

.........................................

इत्युक्त्वैष मनीषावैभवपरिभूतवासवाचार्यः ।
बुधपरिषदलङ्कारो व्याख्यदलङ्कारसर्वस्वम् ॥
अवधृत्यै यदुपतिना विवृतस्य गरीयसस्तदर्थस्य ।
कश्चिद् व्यधित विपश्चिच्छब्दनिबन्धं समुद्रबन्धाख्यः" ॥

इति । अलङ्कारोदाहरणप्रसङ्गे च बहुत्र स रविवर्मदेवमुपश्लोकयति, विशिनष्टि च नाटककर्तृरविवर्मदेवसाधारणैरुक्तैर्विशेषणैः । यथा—

"यद्याकाङ्क्षसि वीक्षितुं गुणरुचे! चेतः! समस्तान् गुणान्
कोलम्बाख्यमुपेहि दक्षिणदिशासीमन्तरत्नं पुरम् ।
आस्ते यत्र भुजेन कीर्तिशशिनः पूर्वाचलेनोद्वह-
न्नुर्वीमर्णवमेखलां यदुपतिः कल्पद्रुमो जङ्गमः ॥
अर्जुनगुणानुरागी रक्षितगोमण्डलो बलज्येष्ठः ।
यदुपतिरभिमतसत्यः शरदयुतं जयति विबुधहितनिरतः ॥
सङ्ग्रामधीरनृपतिर्भीरुरधर्मादभीरुराहवतः ।
शुश्रूषुर्निगमविदस्तद्वाह्यविदो भवत्यशुश्रूषुः" ॥

इत्यादि । तेनास्य रविवर्मदेवस्योक्तरविवर्मानन्यत्वप्रतीतेरस्माकं नाटककविः कविगीतकीर्तिरप्यासीदित्यवगम्यते । यत्तु—

'वपुरिव मधुरं वचः प्रसन्नं वच इव कूपकभूपते! मनस्ते'

इति रशनोपमोदाहरणश्लोके 'कूपकभूपते!' इति सम्बोधनं, तदप्यस्मन्नाटककर्तुरुपपन्नं, यस्मात् कूपकदेशस्यैव राजधानी कोलम्बपुरम् । तच्च स्यानन्दूरपुरादुत्तरतया श्रीवल्लभग्रामाद् दक्षिणतया च शुकसन्देशे—

"कूले भान्तीमथ कुलपुरीं कूपकाधीश्वराणां
लक्ष्मीसाक्षात्कृतिसमुचिते पश्य रत्नाकरस्य ।
भूयोऽप्यात्मप्रमथनभिया तेन विश्वोपभोग्ये
न्यस्तेवास्मिन्नुदरकुहराद् या पुरां रत्नभूता ॥ ५४ ॥

....  ....  ....  ....  ....  ....  ....

लोकत्रय्यामखिलतनुभृल्लोचनैकावलम्बे
कोलम्बेऽस्मिन् क्वचन भवतः कोऽपि मा भूद्विलम्बः ।

1. Published in the 'journal of the Royal Asiatic Society of Great Britain and Ireland', Vol. XVI Part 4.

अल्पीयस्यामपि परिचितावन्यदेशातिशायि-
न्याश्चर्याणामहमहमिका कस्य कुर्वन्न चेतः ॥ ५६ ॥
अग्रे सिन्धुद्वयमथ पुरी काप्यमीषाममुष्यां
केलीलास्यस्मरणगुरुभिः केतुलोलैर्दुकूलैः ।
व्यङ्ग्योत्तंसैरिव रसविदः सत्कवीनां प्रबन्धैः
प्रीतिर्मन्ये मनसि भवतः स्फीततामेष्यतीति ॥ ५७ ॥
अर्हद्धचो यः स्वमिह विभजन्नाश्रमाणां चतुर्णा-
मग्र्यं धर्मं कथयति नृणां कर्मणा केवलेन ।
वन्द्यश्छन्दोरहसि विहरन् वल्लभग्रामवासी
केशिध्वंसी निजपदजुषां क्लेशहन्ता स देवः" ॥ ५८ ॥

इति निर्दिष्टं 'कोल्लम्' इति प्रसिद्धमेव ।

केरलेश्वररविवर्मराजसम्बन्धिनस्त्रयः शिलालेखा उपलभ्यन्ते । तत्राद्यौ द्वौ **एपिग्राफियाइन्डिकायास्तुरीये** पुस्तके (प. १४९—१५२.) **किल्हारनाख्येन** पण्डितमहाशयेन निवेशितौ; तृतीयस्तु अष्टमे पुस्तके (प. ८, ९.) **हुल्षनाम्ना** पण्डितमहाशयेन निवेशितः । तेष्वादिमः **काञ्चीपुरे अरुळाळप्पेरुमाळ्**नामकविष्णुक्षेत्रस्य भित्तेरुपात्तः । स यथा —

"स्वस्ति **श्रीजयसिंह** इत्यभिहितः सोमान्वयोत्तंसको
राजासीदिह केरलेषु विषये नाथो यदुक्ष्माभृताम् ।
जातोऽस्माद् **रविवर्म**भूपतिरु**मा**देव्यां कुमारः शिवाद्
देहव्याप्य (११८८)[1] शकाब्दभाजि समये देहीव वीरो रसः ॥
क्षयं नीत्वा सोऽयं कलिबलमिवारातिनिवहान्
जयश्रीवत् कृत्वा निजसहचरीं पाण्ड्यतनयाम् ।
त्रयस्त्रिंशद्वर्षो यश इव ययौ केरलपदं
ररक्ष स्वं राष्ट्रं नगरमिव **कोलम्ब**मधिपः ॥
जित्वा **सङ्ग्रामधीरो** नृपतिरधिरणं विद्विषं **वीरपाण्ड्यं**
कृत्वासौ पाण्ड्यचोलान् नय इव तनुमान् केरलेभ्योऽप्यधीनान् ।
षट्चत्वारिंशदब्दस्तटभुवि मकुटं धारयन् वेगवत्याः[2]
क्रीडां सिंहासनस्थाश्चिरमकृत महीकीर्तिवाणीरमाभिः ॥

---

१. अस्य शकाब्दस्य समः क्रैस्ताब्दः १२६५. २. वेगवती नाम काञ्च्यां नदी.

कृत्वा केरलपाण्ड्यचोलविजयं क्लृप्ताभिषेकोत्सवः
सङ्ग्रामापजयेन कोङ्कणगतं तं **वीरपाण्ड्यं** रिपुम् ।
नीत्वा स्फीतबलं ततोऽपि विपिनं जित्वा दिशामुत्तरां
काञ्च्यामत्र चतुर्थमब्द (?) मलिखत् **सङ्ग्रामधीरो** नृपः ॥
आ मेरोरा मलयादा पूर्वादा च पश्चिमादचलात् ।
यदुकुलशेखर एष क्षोणीं कुलशेखरः स्वयं बुभुजे ॥

स्वस्तिश्री-चन्द्रकुलमङ्गलप्रदीप-यादवनारायण-केरलदेशपुण्यपरिणाम-नामान्तरकर्ण -**कूपक**सार्वभौम--कुलशिखरिप्रतिष्ठापितगरुडध्वज-**कोलम्बपुरवराधीश्वर**-श्रीपद्मनाभपदकमलपरमाराधक--प्रणतराजप्रतिष्ठाचार्य-विमतराजबन्दीकार-धर्मतरु-मूलकन्द - सद्गुणालङ्कार-चतुष्षष्टिकलावल्लभ-दक्षिणभोजराज-**सङ्ग्रामधीर**-महाराजाधिराज-परमेश्वर-**जयसिंहदेवनन्दन-रविवर्म**महाराज--श्रीकुलशेखर - त्रिभुवनचक्रवर्ती ।

கோனேரின்மைகொண்டான் காஞ்சிபுரத்தில் திருவத்தியூரில் நின்றருளிய அருளாளப்பெருமாள் கோயில் திருப்படி ஸ்ரீவைஷ்ணவர்களுக்கு பெருமாள் அருளாளப்பெருமாளுக்கு நம்பேரால் கட்டின குலசேகரன் சந்திக்கு அமுதுபடி சாத்துபடி உள்ளிட்ட பலவெஞ்சனத்துக்கும் ஆவணிமாதத்து எழுந்தருள நம்பேரால் கண்ட திருநாளுக்கும் திங்கள் திருநாளுக்கும் அமுதுபடி சாத்துபடி உள்ளிட்ட வெஞ்சனத்துக்கும் திருக்கொடை"

इति । द्वितीयः **श्रीरङ्गीयरङ्गनाथक्षेत्रभित्तेरुपलब्धः** । स यथा —

"स्वस्ति श्री**जयसिंह** इत्यभिहितः ............... ॥
क्षयं नीत्वा सोऽयं .... .... ................ ॥
जित्वा **सङ्ग्रामधीरो** .... .... ................ ॥
आ मेरोरा .... .... .... ................ ॥

स्वस्तिश्री-चन्द्रकुलमङ्गलप्रदीप...........श्रीकुलशेखरदेवः ।

कृत्वा दुर्नयवैरिनैर्ऋतशमं संस्कारसंशोभिते
निद्राणामधिदेवतां निरुपमैरभ्यर्च्य माल्यादिभिः ।
धर्मैरन्तरधिष्ठिते सहृदयैः **सङ्ग्रामधीरः** कृती
रङ्गेऽस्मिन् सुमनोऽधिवासमकरोल्लास्ये नियोज्य त्रयीम् ॥

लब्धा सागरनेमिभूमिविषया रन्तुं प्रतिष्ठा यत-
स्तस्मै श्रीकुलशेखरो यदुपतिस्त्रिक्षत्रचूडामणिः ।
रङ्गेऽस्मिन् कमलासखाय हरये रम्यां प्रतिष्ठां ददौ
सन्तः प्रत्युपकुर्वते ह्युपकृताः सर्वे किमत्राद्भुतम् ॥
भूपालैरिलकार्तवीर्यसगरैर्यः पूर्वमासीत् कृतः
पश्चात् प्रौढतमोहरं यदुपतिस्तं भद्रदीपोत्सवम् ।
चक्रे शक्र इवाश्रयः सुमनसां सम्राट् त्रयीधर्मविद्
रङ्गेऽस्मिन् रुचिराङ्कसंश्रितरमारोचिष्णवे विष्णवे ॥
सम्राजामिव यः सतां समुदभूत् तैस्तैर्गुणैर्मातृका
सैष श्रीकुलशेखरः शतभिषक्तारे सकन्यारवौ ।
भट्टेभ्यः पुरतोऽत्र रङ्गनृपतेः पञ्चाशते (?) साक्षिणः
प्रत्येकं प्रतिहायनं पणशतं दातुं प्रतिष्ठां व्यधात् ॥

**कविभूषणस्य**

स्वस्ति कुर्मस्त्रयीधर्मवर्मणे **रविवर्मणे** ।
रणकर्मस्थिताधर्म + र्म + रातिशर्मणे ॥
दुर्बलस्य बलं राजेत्येषा सत्या सरस्वती ।
**सङ्ग्रामधीरो** धर्मस्य दुर्बलस्य बलं कलौ ॥
रविश्च **रविवर्मा** च द्वाविमौ तेजसां निधी ।
एकस्याह्नि प्रतापश्रीरपरस्य त्वहर्निशम् ॥
कृष्णश्च **रविवर्मा** च यदुवंशोद्भवावुभौ ।
एको गोपवधूजारः स्वदारैकपरोऽपरः ॥
राज्याभिषेककामानां **रविवर्ममहीपते** ! ।
पुष्पाभिषेको भूपानां त्वत्पदाम्भोजधारणम् ॥
गुरुकल्पद्रुमेन्द्राढ्यां द्यां करोषि **रवे** ! महीम् ।
ज्ञाता दाता सतां पाता महतां किंनु दुष्करम् ॥
**सङ्ग्रामधीर** ! त्वद्राज्ये चोरो नास्तीति वाङ् मृषा ।
चम्पकद्युतिसर्वस्वचोरस्ते विग्रहः स्वयम् ॥
दृष्ट्वा दक्षिणभोज ! त्वां परे बिभ्यति तद्वरम् ।
परदारानपि दृष्टुं बिभेषि त्वं हि सर्वदा ॥

एकः स्वादु न भुञ्जीतेत्येतत् किं न श्रुतं वचः ।
एकः स्वादु जगत् सर्वं भुङ्क्षे यादवभूपते! ॥
कथं दक्षिणभोज! त्वां ब्रुवते बुद्धिमद्वरम् ।
दत्तं सद्भ्यः सदा पश्चाद् वित्तं यत्तन्न बुध्यसे ॥
रिपूनेको जयामीति रणे मा दृप्य यादव! ।
बाहुः खड्गो मनो वाजी सहायाः किं न सन्ति ते ॥
प्रायो न दोषः स्त्रीहत्या राज्ञां रामसधर्मणाम् ।
सतां सहचरीं हंसि रविवर्मन्! दरिद्रताम् ॥
धनं सर्वं ददामीति कथं ते यादव! व्रतम् ।
ब्रह्माण्डभाण्डागारेऽस्मिन् सञ्चिनोषि यशोधनम् ॥
सेव्यस्तैस्तैर्गुणैरेव सेवितुं यद् ददासि नः ।
एषा यदुपते! सत्यमिक्षुभक्षणदक्षिणा ॥
कुलशेखरभूपाल! सिंहासनं जुषत्वयम् (?)[1] ।
सिंहासनजुषो लोके स्थावरा एव भूभृतः ॥
**सङ्ग्रामधीर** इत्येतं मन्त्रं पञ्चाक्षरं बुधाः ।
जपन्तो दुर्गतिं जित्वा प्राप्नुवन्ति परं शिवम् ॥
इति यादवकीर्तीन्दोः कलाः षोडश सूक्तयः ।
उल्लासयन्तु कुमुदं भूषणे पर्वणि स्फुटाः ॥
अतसीचम्पकवर्णौ तुलसीकीर्तिसुरभीकृतस्वाङ्गौ ।
यदुनाथौ नाथौ नः कृतमपरैश्चित्तदेवनरदेवैः ॥

**कविभूषणस्य**" ।

इति । तृतीयस्तु **तिरुवटि[2]ग्रामस्थश्रीवीरस्थानेश्वराख्यशिवक्षेत्राल्लब्धः** । स यथा—

"स्वस्ति **श्रीजयसिंह**.................... ॥
क्षयं नीत्वा सोऽयं ..... ............. ॥
जित्वा **सङ्ग्रामधीरो** .................... ॥
आ मेरोरा मलयादा.................... ॥

---

१. 'सिंहासनजुषि त्वयि' इति स्यात्.

2, 'Tiruvadi' is near Panrutti, South Arcot District.

स्वस्तिश्रीचन्द्रकुलमङ्गलप्रदीप .... .... .... श्रीकुलशेखरदेवः ।

இவர்க்கு யாண்டு நாலாவது கலியுகவருஷம் 4414 இதில் நீங்கிய ச+++35 இதன் மேல் செல்லாநின்ற மகர நாயற்று பூருவபக்ஷத்து ஏகாதசியும் சனிக்கிழமையும் பெற்ற ரோசணி நாள் திருவதிகையுடையார் திருவீரட்டானம் உடைய நாயனார்கோயில் வாணணைகபிலாயத் திருமலை ஸ்தூபிபரியந்தமாக திருமஞ்சனமும் பண்ணி புரச்சரணை திருக்கல்லும் சாற்றியருளினார் ரவிவர்ம மஹாராஜன் பெருமாள் குலசேகர தேவர்

स्वस्ति श्री ।"

इति ।

एषु शिलालेखेषु निर्दिष्टो **रविवर्मराजो** वंशपितृगुणनामसंवादात् **प्रद्युम्नाभ्युदय**कवेर्न भिद्यत इत्यवगमे तस्य **सङ्ग्रामधीर**ख्यात्यनुगुणं पाण्ड्यादिदेशविजयपूर्वकमकुटधारणाभिषेकादिरूपमपदानमप्येभिरपूर्वमाविष्कृतं भवति । इदं पुनरस्माकं केरलीयेषु राजसु एकमपि देशान्तरव्यापिप्रतापमविजानतां परं प्रीतिपदं, यत् ११८८ तमशकवर्षसमुत्पन्नः कश्चित् केरलेषु **कोलम्बपुरे** राजा **रविवर्मा** नाम निस्सामान्येन महाकवित्वेनेव प्रतापेन **काञ्ची**पुरपर्यन्तदेशविजयिना भूषितो बभूवेत्यसन्दिग्धमुपोद्घातेऽस्मिन् वक्तुमवसरमविन्दाम । न केवलमेतावदेव, यदुवंश्यत्व-पद्मनाभपदकमलपरमाराधकत्वसाम्याद् अयं **रविवर्मदेवोऽस्मद्वञ्चि-महाराजानां** पूर्वजः सम्भाव्यत इत्यपि शक्नुमो वक्तुम् ॥

**त. गणपतिशास्त्री**

# कथासारः ।

## प्रथमेऽङ्के—

लोकहितैषिणा नारदेनोद्दीपितः श्रीभगवान् कृष्णो वज्रपुराधीश्वरं पितामहवर-बलदर्पितं वज्रणाभं व्यापादयितुं गदसाम्बसहितस्य प्रद्युम्नस्य वज्रणाभच्छन्दं विनेतरै-र्दुष्प्रवेशे वज्रपुरे प्रवेशाय नाट्यप्रयोगपरितोषितमहर्षिवरमहिम्ना सर्वत्राप्रतिहतप्रवेशं सकलकलाभिज्ञं भद्रनटं प्रेरयति ।

## द्वितीये—

धारितशैलूषभूमिकेन गदसाम्बसमेतेन प्रद्युम्नेन सह नाट्यप्रयोगप्रसङ्गाद् वज्र-पुरं प्रविश्य तत्र वज्रणाभनियोगेन तत्कन्यकां सङ्गीतकं शिक्षयता स्वालिखितं प्रद्युम्न-प्रतिच्छन्दं कथञ्चित् प्राप्याङ्कुरितमदनया प्रभावत्याहूय पृष्टेन भद्रनटेन प्रद्युम्नस्य वंश-गुणरूपादिगरिमवर्णनेनोद्दीपितानुरागायास्तस्या भावबन्धो द्वारकानगरात् प्रद्युम्नानय-नप्रतिज्ञानाद् दृढीक्रियते ।

## तृतीये—

तथादृढीकृतप्रद्युम्नविषयकभावबन्धायाः प्रभावत्या भद्रनटमुखाच्छ्रुतप्रभावती-रूपगुणसम्पदः प्रद्युम्नस्य च परस्परानुरागो रम्भाभिसरणाख्ये प्रेक्षणके परस्परदर्श-नेन परां कोटिमारुरोह ।

## चतुर्थे—

नायिकानायकयोर्विरहतापस्यासह्यत्वं, परस्परस्य परस्परविषयकानुरागस्य नि-र्धारणं, मनोरथसिद्धिश्चाभ्यधायि ।

## पञ्चमे—

वज्रणाभसोदर्यस्य सुनाभस्य दुहित्रोश्चन्द्रवतीगुणवत्योः प्रभावतीमुखेन गदसा-म्बाभ्यां सङ्गमनस्य सूचनं, प्रद्युम्नगदसाम्बैः क्रमेण वज्रणाभतत्सैन्यसुनाभानां युद्धे वधः, प्रद्युम्नादीनां प्रभावत्यादिषु सुतोत्पत्तिः, प्रद्युम्नस्य वज्रपुराधिराज्याभिषेकश्च प्रतिपाद्यते ॥

---

श्रीः ।

रविवर्मभूपविरचितं

# प्रद्युम्नाभ्युदयम् ।

---

## प्रथमोऽङ्कः ।

(ततः प्रविशति भद्रनटः)

**भद्रनटः** — (सविमर्शम्)

श्रियमुदवहज्जातां संक्षोभितात् कलशाम्बुधेः
समधिकगुणः साक्षात् सौभाग्यसिद्धिमिवाद्भुताम् ।
निरवधिबलेप्वाराद्देवासुरेषु मिषत्सु यः
स खलु भगवान् भद्रं पुष्णातु वः पुरुषोत्तमः ॥ १ ॥

अपि च—

शुभानां सामग्र्यै कमपि महिमानं मनुमहे
*मणिस्थूणामान्तं मनुजवपुषं केसरिमुखम् ।
दधानो यस्य द्राग् दनुकुलपतेरान्त्रवलयं
जगद्रक्षाबद्धप्रतिसर इवालक्ष्यत करः ॥ २ ॥

(नान्द्यन्ते ततः प्रविशति सूत्रधारः)

**सूत्रधारः** — (परिक्रामितकेन नेपथ्याभिमुखमवलोक्य) आर्ये! इत आगम्यताम् ।

(प्रविश्य)

**नटी** — (क) अय्य! इअह्मि ।

**सूत्रधारः** — आर्ये! समादिष्टोऽस्मि सकलकलाकुशलस्य चन्द्रकुलमङ्गलप्रदीपस्य समस्तसामन्तशेखरीक्रियमाणशासनस्य विविधशाखावलम्बनधर्मतरुमूलकन्दस्य प्रणयिजनचिन्तामणेः **कोलम्बपुरपरिष्कारस्य** देवस्य **रविवर्मणः**

---

(क) आर्य! इयमस्मि.

---

*मणिस्थूणायाममान्तं महत्त्वात् तदन्तरासितुमपारयन्तं ततो बहिर्निस्सरन्तमिति यावत्.

पादपद्मोपजीविन्या राजपरिषदा, यथा 'अद्य सकलभुवनसर्गस्थितिसंहारकारणस्य क्षीरार्णवकन्यकास्तनकलशकाश्मीरबालातपरञ्जितभुजान्तरमणिशिलातलस्य निरन्तरविजृम्भमाणदेहप्रभापटलशैवालितदक्षिणवारिराशेः पर्यङ्कभुजङ्गपुङ्गवफणामाणिक्यमरीचिसन्ध्यानुबन्धबन्धुरवदनचन्द्रमसः केरलदेशसुकृतपरिणतेः यादवनृपकुलदैवतस्य भगवतः श्रीपद्मनाभस्य यात्रोत्सवे किमपि रूपकमभिनवमभिनयता वयं विनोदनीयाः' इति ।

**नटी**–(सहर्षम्) (क) अय्य ! महन्तं खु से परिसआए सङ्गीअम्मि णिउणत्तणम् । णं एत्थ पओअविण्णाणं दंसअन्तेण अय्येण लम्भिज्जइ गरुई सम्भावणा ।

**सूत्रधारः**—आर्ये ! मा मैवं वादीः ।

अनन्यभावामास्थानीं तैस्तैरावर्जयन् गुणैः ।
प्रियेण संयोजयितुं नटः कश्चित् प्रगल्भते ॥ ३ ॥

**नटी**—(ख) एव्वं एदं अय्य ! भवारिसस्स कस्स वि एव्व एआरिसम्मि कज्जे पअब्भत्तणम् । ता कस्स उण कइणो किदी पओअणिज्जा ।

**सुत्रधारः**–(स्मृतिमभिनीय सहर्षम्) अस्ति किल सङ्गीतशास्त्रपारदृश्वना निखिलगुणरत्नरोहणगिरिणा कविजनमयूरकालमेघेन साहित्यविद्याविचक्षणेन दक्षिणभोजराजेन महाराजपरमेश्वरेण संग्रामधीरापरनामधेयेन श्रीरविवर्मदेवेन विरचितं **प्रद्युम्नाभ्युदयं** नाम नाटकम् । तत् प्रयुञ्जानाः सामाजिकान् उपास्महे ।

**नटी**–(सश्लाघम्) (ग) अय्य ! वीरासिरीए विअ सरस्सईए वि अहिरमइ एस जदुणाहो ।

**सूत्रधारः**–आर्ये ! किमुच्यते—

संग्रामभूमिषु सभासु च धीर एष शस्त्रेण बुद्धिविभवेन च तैक्ष्ण्यभाजा ।
दर्पान्धकारितधियो नृपतीन् बुधांश्च जित्वा क्षितौ विहरते जयसिंहसूनुः ॥ ४ ॥

---

(क) आर्य ! महत्खलु अस्याः परिषदः सङ्गीते निपुणत्वम् । नन्वत्र प्रयोगविज्ञानं दर्शयतार्येण लप्स्यते गुर्वी सम्भावना.

(ख) एवमेतद् आर्य ! भवादृशस्य कस्याप्येवैतादृशे कार्ये प्रगल्भत्वम् । तत् कस्य पुनः कवेः कृतिः प्रयोजनीया .

(ग) आर्य ! वीरश्रियेव सरस्वत्याप्यभिरमत एष यदुनाथः.

**नटी**—(क) णं एव्वंविहस्स णरवइणो पबन्धं अहिणअन्ताणं अह्माणं हत्थगदा मणीसिदसिद्धी ।

**सूत्रधारः**—(सबहुमानम्) आर्ये! साधु भाणितम् ।

भरतजलधिकर्णधारः प्रबन्धा यदुक्ष्मापति-
स्त्रिभुवनविजयी मुरारेः कुमारः स्मरो नायकः ।
परिषदभिनयार्थाभिज्ञा प्रवीणाश्च नाट्ये वयं
फलितमिह तदद्य पुण्यैश्चिरान्नः पुरा सञ्चितैः ॥ ५ ॥

(परिक्रामन् परितो विलोक्य सानन्दम्) अये सकलजगदानन्दकरः कथमयं वसन्तः सम्प्राप्तः । सम्प्रति हि—

चूतेचूते परभृतरवैः कल्प्यते काहलश्रीः
सन्नह्यन्ते विजयकरिणश्चन्दनाद्रेः समीराः ।
आविर्गन्धं दधति तरवोऽप्यस्त्रजालं समन्ता-
दुद्युङ्क्ते तन्मधुसहचरो जेतुमुर्वीं मनोभूः ॥ ६ ॥

**नटी**—(सकौतुकम्) (ख) अहं वि णं वण्णेमि—

अहिणवविआससुहअं सङ्गमिअं दाहिणेण पवणेण ।
अल्लिअइ महुरगीओ सणिअं सहआरमञ्जरिं भमरो ॥ ७ ॥

**सूत्रधारः**—आर्ये! साधु वर्णितम् । किन्तु—

आवहन् सुमनोवृद्धिमवासः कामपि श्रियम् ।
कामस्य जनकोऽस्माभिः कथं वर्ण्येत माधवः ॥ ८ ॥

(नेपथ्ये) साधु भणितम् । (आवहन्नित्यादि पठति) ।

**नटी**—(आकर्ण्य) (ग) को एसो अय्यस्स वअणं अणुमोदइ ।

**सूत्रधारः**—(नेपथ्याभिमुखमवलोक्य) आर्ये! अयमसौ देवर्षिर्नारदः कृष्णगुण-

---

(क) नन्वेवंविधस्य नरपतेः प्रबन्धमभिनयतामस्माकं हस्तगता मनीषितासिद्धिः.

(ख) अहमपि ननु वर्णयामि—
अभिनवविकाससुभगां सङ्गमितां दक्षिणेन पवनेन ।
आलीयते मधुरगीतः शनैः सहकारमञ्जरीं भ्रमरः ॥

(ग) क एष आर्यस्य वचनमनुमोदते.

कीर्तनप्रवृत्तो माधवनामसाम्यान्मद्वचनेनैव तमुपश्लोकयति । तदावामप्यनन्तरकरणीयाय सज्जीभवावः । (इति निष्क्रान्तौ) ।

## प्रस्तावना ।

---

(ततः प्रविशति आसनस्थः सपरिवारः कृष्णो नारदश्च)

**नारदः**—साधु भणितम् (आवहन्नित्यादि पठति)

**कृष्णः**—भगवन्! अलमतिप्रसङ्गेन ।

**नारदः**—प्रद्युम्नकौस्तुभरत्नाकर! अलममुना भवतो निवारणेन । अशक्तिरेव मां भवद्गुणकीर्तनप्रसङ्गान्निवारयति । तथा हि—

पद्मासनः सृजति कृष्ण! भवान् प्रपञ्चं
पश्चात्तमेनमभिरक्षति चक्रपाणिः ।
रुद्रस्ततो हरति तं युगसन्निवृत्तौ
शक्नोति कः स्तुतिषु तद्भवतो गुणानाम् ॥ ९ ॥

किञ्च

दाक्ष्यं यद् भवतो हिरण्यकशिपोर्वक्षस्तटीपाटने[1]
तत्तादृग्दशकण्ठकण्ठविपिनच्छेदे च यन्नैपुणम् ।
यद्वा यादववीर! कंसकदनक्रीडाक्रमे कौशलं
शंसन्ती चरितानि तानि *तलिना जिह्रेति जिह्वा मम ॥ १० ॥

**कृष्णः**—महतीवैपञ्चिक! किमेवमभिधीयते । ननु भवत्प्रयुक्तया स्तोत्रपरम्परया ममैव हृदयं जिह्रेति ।

**नारदः**—सत्यमभिहितं भवता, यतः—

स्तोतुं समस्ताः श्रुतयोऽपि नालं
यद् वैभवं त्वद्गुणकर्मनाम्नाम् ।
अस्मादृशास्तद् यदि वर्णयेयु-
स्तदा न लज्जेत कथं मनस्ते ॥ ११ ॥

**कृष्णः**—महर्षे! सकललोकमाननीयमात्मानुभावमनालोच्य किमेवमभिदधासि ।

---

१ 'दारणे' इति ख. पाठः.

---

*. तलिनाल्पा.

सनत्कुमारादिषु सत्सु पुत्रेष्वनन्यसामान्यगुणाश्रयेण ।
पितामहः पुत्रवतां महात्मन्! धुरि प्रतिष्ठां लभते त्वयैव ॥ १२ ॥

तदुपरम्यताम् । किमागनकारणम् ।

**नारदः**—प्रथमं तावन्महाभाग! वसुदेववितन्यमानाश्वमेधमहोत्सवधुरन्धरस्य भवतो दर्शनम् ।

**कृष्णः**—किं पुनर्द्वितीयम् ।

**नारदः**—दानवकुलदलनदीक्षित! तदेतदावेद्यते ।

**कृष्णः**—भगवन्! अवहितोऽस्मि ।

**नारदः**—अद्य किल कश्चिदखण्डभुजशौण्डीर्यकुण्ठिताखण्डलवज्रो वज्रणाभनामा दानवपतिः कनकगिरिकटकचिरकालतप्ततपःप्रकर्षसन्तोषितस्य भगवतः पितामहस्य सकाशाद् अमरावध्यतामनुमतिमन्तरेणाखिलैरपि दुष्प्रवेशं सर्वरत्नमयं वज्रपुरं नाम नगरं सकलसङ्कल्पसिद्धिञ्च लब्ध्वा द्विगुणितमदान्धकारितहृदयस्त्रिभुवनमुपमृद्नाति ।

**कृष्णः**—देवर्षे! ममेदं पूर्वमेवागत्य भगवता महेन्द्रेण कथितं यथा "चतुराननदत्तवरलाभगर्वितो वज्रणाभः कदाचिदमरावतीमासाद्य मामेवमुक्तवान्—

'देहि मे जगदैश्वर्यं नो चेद् युध्यस्व वासव! ।
सामान्यं हि जगत् कृत्स्नं काश्यपानां महात्मनाम्' ॥ १३ ॥

इति । मया च भगवता बृहस्पतिना सह मन्त्रयित्वा

'सत्रेऽद्य दीक्षितः सौम्य! कश्यपो नः पिता मुनिः ।
तस्मिन् वृत्ते यथा न्याय्यं तथा स हि करिष्यति' ॥ १४ ॥

इति प्रत्युक्तम् । स च तं कश्यपमुपेत्य निवेदितवृत्तान्तः तेन च 'पुत्र! सत्रावसाने यथोचितं भविष्यति त्वं पुनरिदानीं स्वपुरमेव प्रयाहि' इति समादिष्टो निकृष्टाशयः सकलजगदुपप्लवमाचरन् वज्रपुरमधितिष्ठति। अतः परं भवानेव प्रमाणम्" इति। मयापि तदानीमेव तस्य दुरात्मनः सुरद्वेषिणो निरसनमध्यवसितम् ।

**नारदः**—(सहर्षबहुमानम्) मधुकैटभमर्दन! तादृशो दुष्टान् निग्रहीतुमेव महीमवतीर्णोऽसि । अमुष्य पुनरति हि वचांसि प्रतापगरिमा ।

---

१ 'लनिधन' इति क. पाठः.

२ 'णाखण्डलाद्यैर्दु' क. पाठः.

बन्दीकृत्योपनीतास्त्रिदशमृगदृशश्चामरैर्यं श्रयन्ते
दिक्पालाश्चाटुकाराः प्रतिदिनमुचितैः प्राभृतैर्यं भजन्ते ।
नित्यं नीराजयन्ते भुजगयुवतयो यं फणारत्नदीपै-
र्दृप्तस्त्रैलोक्यलक्ष्मीपतिरिह स कथं कथ्यते वज्रणाभः ॥ १५ ॥

किं च

सम्भोगार्तिजुषाममुष्य नगरे त्रस्तश्चरन् मारुतः
स्वेदाम्बुव्यपनोदमेव कुरुते शुद्धान्तवामभ्रुवाम् ।
उल्लासश्रियमेव पद्मसरसामुत्पादयत्यंशुमान्
सर्वां यामवतीं शशी च तनुते सान्द्रोल्लसच्चान्द्रिकाम् ॥ १६ ॥

तदिह कालासहेऽर्थे भवता न विलम्बितव्यम् ।

**कृष्णः**—महामुने! तातेन वितन्यमानेन महाक्रतुनाश्वमेधेन खल्वियतो दिवसान् विलम्बितमस्माभिः। स चेदानीमासन्नावभृथो वर्तते। एतदवसानमेव तस्य दानवहतकस्य जीवितावसानम् ।

प्रद्युम्न एव भगवन्नचिरेण वत्सो
बाणैर्निहत्य तमिमं युधि वज्रणाभम् ।
नेत्राम्बुभिस्तदवरोधनितम्बिनीनां
निर्वापयिष्यति जगत्त्रितयस्य तापम् ॥ १७ ॥

**नारदः**—(सप्रमोदम्) जगत्पते! तस्य खलु भवदात्मजन्मनः शम्बरमथनस्य किं नाम दुष्करम् । अयं चार्थोऽर्थानुबन्धी ।

**कृष्णः**—कथमिव ।

**नारदः**—अस्ति किल तस्य दानवपतेरखिलजनहृदयङ्गममतिशयितकान्ति किमपि प्रभावती नाम कन्यारत्नम् ।

वरदानेन सा लब्धा मात्रा किल वरानना ।
हैमवत्या महादेव्याः सकाशादिति नः श्रुतम् ॥ १८ ॥

**कृष्णः**—एवं कृच्छ्रलब्धा सा स्यादेव पित्रोः प्रेमपात्रम् ।

**नारदः**—तां च महर्षिर्दुर्वासाः कदाचिदेवमनुजग्राह 'वत्से! यस्त्वां पाणौ करिष्यति स त्वया सहचरितधर्मा निरवधिकं कालं जीविष्यति । त्वमपि जीवत्पुत्रा भविष्यसि' इति ।

**कृष्णः**—न खलु तस्य परमर्षेर्वचनमन्यथा भविष्यति ।

**नारदः**—सा च सम्प्रति नवयौवनोदयविशेषरमणीया तच्छन्दानुवर्तिना पित्रा स्वयंवरे स्थापिता सती तदर्थमागतमात्मनोऽननुरूपतया सर्वमपि युवजनमवजानाति । अमुष्मिन् पुनर्वज्रपुरगते सकललोकातिशायिसौन्दर्यसम्पदि प्रद्युम्ने करिष्यत्येव सा भावबन्धम् ।

**कृष्णः**—तदपि भवतु ।

**नारदः**—द्वारवतीनायक! अधुना वज्रणाभवधाय भवतः समुद्योगमहोत्सवेन देवपरिषदं परितोषयितुम् अनुज्ञा मम दीयताम् ।

**कृष्णः**—देवर्षे! नारद!

श्रूयते वागियं येन मधुरा महतीपते! ।
गुणबद्धं मनस्तस्य नान्यतश्चलितुं क्षमम् ॥ १९ ॥

**नारदः**—एष साधयामि । (इति निष्क्रान्तः ।)

**कृष्णः**—(सविमर्शम्) वज्रणाभभुजपरिघपालितं सर्वदुष्प्रवेशं वज्रपुरं कथं प्रवेष्टव्यम् । (स्मरणनाटितकेन) विद्यते किल तातस्यास्मिन्नश्वमेधे नाट्यप्रयोगनैपुणपरितोषितमहर्षिसङ्घदत्तविविधवरलब्धवैभवो भद्रनामा नटः । स खलु प्रसिद्धाकाशगमनः सर्वत्राप्रतिहतप्रवेशश्च । तन्मुखेनैव सर्वं साधनीयम् । (नेपथ्याभिमुखमवलोक्य) कः कोऽत्र भोः ।

(प्रविश्य)

**प्रतीहारी**—(सप्रणामम्) (क) जेदु देवो ।

**कृष्णः**—विजयवति ! भद्रनट आहूयताम् ।

**प्रतीहारी**—(ख) जं देवो आणवेदि । (निष्क्रान्ता)

(ततः प्रविशति प्रतीहार्योपदिश्यमानमार्गो भद्रनटः)

**भद्रनटः**—अहो महीयान् मे भाग्यपरिपाकः । यतः—

क्षेमङ्करस्त्रिजगतां भगवानिदानीं
मार्गे भविष्यति दृशोर्मम वासुदेवः ।
ज्ञानाधिकैर्मुनिभिरप्यपरोक्ष्यते यः
प्रत्यङ्मुखेन मनसैव परोरजोभिः ॥ २० ॥

(क) जयतु देवः.

(ख) यद् देव आज्ञापयति.

**प्रतीहारी**—(क) अय्य ! णट्टाअरिअ ! णं एस तिहुवणणाहो तुह आअमणं पडिवालअन्तो चिट्ठइ । ता तुरिअं उवसप्पतु भवं ।

**भद्रनटः**—(उपसृत्य सप्रणामम्) विजयतां देवः ।

प्रत्यूहे जगतां शुभस्य भवता प्राग्ज्योतिषाधीश्वरे
गर्वग्रन्थिलदोष्णि देव ! गमिते पत्युः पितॄणां पुरम् ।
शृण्वन् किन्नरगीयमानमधुना त्वद्विक्रमप्रक्रमं
निश्चिन्तस्त्रिदिवौकसामधिपतिः स्वाराज्यमातिष्ठति ॥ २१ ॥

**कृष्णः**—तदिदमिदानीमन्यथा संवृत्तम् ।

**भद्रनटः**—देव ! कस्तर्हि भवतः कोपाग्नेरिन्धनीभवितुमिच्छति ।

**कृष्णः**—पितामहवरदानमत्तेन वज्रणाभनाम्ना दानवेन त्रिभुवनमिदमाक्रम्यते । सम्प्रति तद्व्यापादनाय गदसाम्बसहितं वत्सं प्रद्युम्नमुद्योजयामि ।

**भद्रनटः**—

तेजस्विने कुमाराय प्रद्युम्नाय जगत्पते ! ।
कथमस्मै स तिष्ठेत दानवेन्द्रस्तमोमयः ॥ २२ ॥

**कृष्णः**—विधातृसङ्कल्पनिर्मितं तस्य वज्रपुरं नाम नगरं तच्छन्दमन्तरेण केनापि प्रवेष्टुमशक्यम् । वत्सस्य पुनस्तत्प्रवेशस्त्वन्मुख एव भविता ।

**भद्रनटः**—देव ! अस्य भवत्प्रसादस्य कथमहं पात्रं भविष्यामि ।

**कृष्णः**—कर्णे एवमिव ।

**भद्रनटः**—देव ! सर्वमवधारयामि ।

(नेपथ्ये)

**वैतालिकः**—देव ! देवकीनन्दन ! भवतः सुखाय भवतु माध्यन्दिनी सन्ध्या ।

आतिष्ठत्यधुना यजूंषि भगवत्यम्भोजिनीवल्लभे
पद्मान्तर्दलमाश्रयन्ति मधुपाः प्रौढातपक्लेशिताः ।
हस्तैः शीकरवर्षिभिः सहचरीराश्वासयन्ति द्विपा
बर्हैर्मन्दिरबर्हिणश्च विततैः प्रच्छादयन्ति प्रियाः ॥ २३ ॥

---

(क) आर्य ! नाट्याचार्य ! नन्वेष त्रिभुवननाथस्तवागमनं प्रतिपालयंस्तिष्ठति । तत् त्वरितमुपसर्पतु भवान् .

**कृष्णः** – (ऊर्ध्वमवलोक्य) अये कथं मध्याह्नः सम्प्रवृत्तः । तदहमिदानीं वज्रणाभविजयाय वत्सस्य प्रस्थानमङ्गलानि संविधातुमभ्यन्तरमेव प्रविशामि । भद्रनट ! त्वमपि समीहितसिद्धये प्रवर्तस्व ।

**भद्रनटः** – यदाज्ञापयति देवः ।

यं द्रष्टुमेव हृदयैर्यमिनो यतन्ते
यद्वैभवस्तुतिषु वन्दिन एव वेदाः ।
आहूय तेन भवता जगदन्तरात्म-
न्नाज्ञापितोऽस्म्यहमिदं तपसः फलं मे ॥ २४ ॥

(निष्क्रान्ताः सर्वे)

इति प्रथमोऽङ्कः ।

---

## अथ द्वितीयोऽङ्कः ।

(ततः प्रविशति चेटी)

**चेटी** –(क) आणत्तह्मि देवीए जह 'हञ्जे ! कलावादि ! अय्यभद्दणडं दट्ठूण सङ्गीतकलाहिओए केरिसी वच्छा पहावदि त्ति पुच्छिअ आअच्छ'त्ति । पुच्छिएण अ तेण 'अदिट्ठपुरुवं खु से सिक्खागहणम्मि पहावदीए णेउणं'ति कहिदं । जाव तस्स वअणं देवीए विण्णवेमि । (सविमर्शम्) एव्वं सम्पुण्णगुणाए भट्टिदारिआए णवरं वरलाहो एव्व परिहीअदि । एसा खु सअंवराअदं सअलं वि जुवजणं ओहीरेइ । (साशंसम्) (जइ) इमाए अणुरूवउणो को वि जुवा लम्भिज्ज, ताहे पआवइणो णिम्माणकोसलं सहलं होज्ज । (पुरोऽवलोक्य) कहं एसा पमदवणपालिआ परहुदिआ इदो एव्व आअच्छइ ।

(प्रविश्य)

**परभृतिका** – (सहर्षम्) (ख) देवीए सहत्थसंवड्ढिअस्स उज्जाणरअणणामहेअस्स सहआरसाहिणो पढमप्पसूणुग्गममहोसवं विण्णवन्ती पसादपत्तं होमि । (अग्रतो निर्वर्ण्य) देवीए हिअअणिव्विसेसा कहं कलावदी अहिवट्टइ । णं अणालविअ गन्तुं ण जुत्तं । ता उवसप्पामि । (उपसृत्य) हला! कलावदि ! कुदो आअच्छसि ।

---

(क) आज्ञप्तास्मि देव्या यथा 'हञ्जे! कलावति! आर्यभद्रनटं दृष्ट्वा सङ्गीतकलाभियोगे कीदृशी वत्सा प्रभावती इति पृष्ट्वा आगच्छ' इति । पृष्टेन च तेन 'अदृष्टपूर्वं खल्वस्याः शिक्षाग्रहणे प्रभावत्या नैपुणम्' इति कथितम् । यावत्तस्य वचनं देव्यै विज्ञापयामि । एवं समुत्पन्नगुणाया भर्तृदारिकाया नवरं वरलाभ एव परिहीयते । एषा खलु स्वयंवरागतं सकलमपि युवजनमवधीरयति । (यदि) अनयानुरूपगुणः कोऽपि युवा लभ्येत, तदा प्रजापतेर्निर्माणकौशलं सफलं भवेत् । कथमेषा प्रमदवनपालिका परभृतिका इत एवागच्छति.

(ख) देव्या स्वहस्तसंवर्धितस्योद्यानरत्ननामधेयस्य सहकारशाखिनः प्रथमप्रसूनोद्गममहोत्सवं विज्ञापयन्ती प्रसादपात्रं भवामि । देव्या हृदयनिर्विशेषा कथं कलावत्यभिवर्तते । एनामनालप्य गन्तुं न युक्तम् । तदुपसर्पामि । सखि! कलावति! कुत आगच्छसि.

**कलावती**--(क) सहि! परहुदिए! देवीए आदेसेण भट्टिदारिआए पहावदीए सङ्गीदसिक्खाकोसलं अय्यभद्दणडमुहादो सुणिअ आअच्छामि।

**परभृतिका**--(ख) तेसु गीदसारप्पमुहेसु कुसीलववरेसु चिट्ठन्तेसु पहावदिं सङ्गीदं सिक्खावेदुं भट्टिणा किंत्ति अहिणवाअदो एसो णिउत्तो।

**कलावती**--(ग) हला! किं सव्वे भद्दणडो होन्ति। अअं खु मुणिजणादिण्णबहुविहवरजणिदमाहप्पो सव्वत्थ वि अप्पडिहदसञ्चारो अहिलासु वि कलासु परं विण्णाणं सम्पत्तो अ।

**परभृतिका**--(घ) कहं एस महाणुभावो एत्थ समाअदो।

**कलावती**--(ङ) सुणादु पिअसही। सेवासमाअदेण चारणवइणा हंसेण कहाप्पसङ्गेसु समावेदिअणीसामण्णविज्जाविहवं इमं भद्दणडं दट्ठुं भट्टिणो महन्तं कोऊहलं आसी।

**परभृतिका**--(च) भट्टिणो तारिसेसु महन्तो खु पक्खवादो। (सकौतुकम्) तदो तदो।

**कलावती**--(छ) तदो एस सेलूसवरो सच्छन्देण दीवादो दीवन्तरं आहिण्डन्तो जादु साहाणअरं सम्पत्तो रामाअणकहाणुबन्धिणाडअप्पओअपरितोसिदेहिं तत्थ णिवसन्तेहिं दाणवेहिं विण्णविओ चिरआलकुदूहलिणा भट्टिणा सपरिअणो वज्जपुरं आणीअ सविसेसविहिदसक्कारो तस्स आदेसेण भट्टिदारिअं सङ्गीअं सिक्खावेइ।

---

(क) सखि! परभृतिके! देव्या आदेशेन भर्तृदारिकायाः प्रभावत्याः सङ्गीतशिक्षाकौशलमार्यभद्रनटमुखात् श्रुत्वा आगच्छामि.

(ख) तेषु गीतसारप्रमुखेषु कुशीलववरेषु तिष्ठत्सु प्रभावतीं सङ्गीतं शिक्षयितुं भर्त्रा किमित्यभिनवागत एष नियुक्तः.

(ग) सखि! किं सर्वे भद्रनटो भवन्ति। अयं खलु मुनिजनदत्तबहुविधवरजनितमाहात्म्यः सर्वत्राप्यप्रतिहतसञ्चारोऽखिलास्वपि कलासु परं विज्ञानं सम्प्राप्तश्च.

(घ) कथमेष महानुभावोऽत्र समागतः.

(ङ) शृणोतु प्रियसखी। सेवासमागतेन चारणपतिना हंसेन कथाप्रसङ्गेषु समावेदितनिस्सामान्यविद्याविभवमिमं भद्रनटं द्रष्टुं भर्तुर्महत् कौतूहलमासीत्.

(च) भर्तुस्तादृशेषु महान् खलु पक्षपातः। ततस्ततः.

(छ) तत एष शैलूषवरः स्वच्छन्देन द्वीपाद् द्वीपान्तरमाहिण्डमानो जातु शाखानगरं सम्प्राप्तो रामायणकथानुबन्धिनाटकप्रयोगपरितोषितैस्तत्र निवसद्भिर्दानवैर्विज्ञापितश्चिरकालकुतूहलिना भर्त्रा सपरिजनो वज्रपुरमानीय सविशेषविहितसत्कारस्तस्यादेशेन भर्तृदारिकां सङ्गीतं शिक्षयति.

**परभृतिका** -- (क) (सश्लाघम्) हला! सहावरमणिज्जाए पहावदीए कलाहिओओ णाम हेमलट्ठीए दहणसक्कारो, मणिसलाआए साणसमुल्लेहो, चम्पअमालाए हिमजलपरिसेओ, चन्दिमाए सरअसमागमो अ।

**कलावती** -- (ख) सहि! साहु भणिअं। तुमं पुण कहिं पत्थिदासि।

**परभृतिका** --(ग) हला! देवीए सुदणिव्विसेसं संवड्ढिअस्स उज्जाणरअणस्स पढमकुसुमुग्गमं विण्णविदुं गच्छामि।

**कलावती** -- (घ) एस दाणिं महन्तो खु ऊसवो देवीए सम्पत्तो। ता देवीए सआसं गच्छामो। (इति निष्क्रान्ते)

प्रवेशकः।

---

(ततः प्रविशति सखीद्वितीया प्रभावती।)

**प्रभावती** --(ङ) हला! कलहंसिए! तुमं खु अय्यभद्दणडं हक्कारिदुं पत्थिदा अज्ज किं तेण विणा आअदासि।

**कलहंसिका**--(च) पिअसहि! विह्मअरसविक्खत्तहिअआए विह्मरिदं तस्स हक्कारणम्।

**प्रभावती** -- (छ) सहि! विह्मअस्स किं कालणं।

**कलहंसिका** -- (ज) तस्स णट्टाअरिअस्स घरे किं वि अदिट्ठपुव्वरूवसोहं पुरिसप्पडिच्छन्दअं दिट्ठम्।

**प्रभावती** -- (झ) सहि! तिहुवणदुल्लहं खु तं, जेण तुमं वि एव्वं विह्मअक्खित्तहिअआ संवुत्ता।

---

(क) सखि! स्वभावरमणीयायाः प्रभावत्याः कलाभियोगो नाम हेमयष्ट्या दहनसंस्कारो, मणिशलाकायाः शाणसमुल्लेखः, चम्पकमालाया हिमजलपरिषेकः, चन्द्रिकायाः शरत्समागमश्च.

(ख) सखि! साधु भणितम्। त्वं पुनः कुत्र प्रस्थितासि.

(ग) सखि! देव्या सुतनिर्विशेषं संवर्धितस्योद्यानरत्नस्य प्रथमकुसुमोद्गमं विज्ञापयितुं गच्छामि.

(घ) एष इदानीं महान् खलूत्सवो देव्याः सम्प्राप्तः। तद्देव्याः सकाशं गच्छावः.

(ङ) सखि! कलहंसिके! त्वं खल्वार्यभद्रनटमाकारयितुं प्रस्थिताद्य किं तेन विनागतासि.

(च) प्रियसखि! विस्मयरसाक्षिप्तहृदयया विस्मृतं तस्याकारणम्.

(छ) सखि! विस्मयस्य किं कारणम्.

(ज) तस्य नाट्याचार्यस्य गृहे किमप्यदृष्टपूर्वरूपशोभं पुरुषप्रतिच्छन्दकं दृष्टम्.

(झ) सखि! त्रिभुवनदुर्लभं खलु तद्, येन त्वमप्येवं विस्मयाक्षिप्तहृदया संवृत्ता.

**कलहंसिका** – (क) णिरदिसअसुन्देरगुणवासभवणं तं कस्स हिअअं ण विह्मावेइ ।

पडिमा विअ रइवइणो पच्चादेसो व्व पुण्णिमाससिणो ।
सिङ्गारस्स व जीओ केण कहिज्जइ जअम्मि तं रूवं ॥ १ ॥

**प्रभावती** – (साभिलाषम्) (ख) सहि! कलहंसिए! इमिणा तुह वअणेण तं रूवरअणं दट्ठुं अहिअं मे कोऊहलं वट्टइ । कहं एत्थ आणेदव्वं ।

**कलहंसिका** – (सोत्प्रासम्) (ग) इमम्मि उवणीदे किं पारितोसिअं पिअसहीए दिज्जइ ।

**प्रभावती** – (घ) जं रोअदि सहीए ।

**कलहंसिका** – (सपरिहासम्) (ङ) ता अत्तणो विज्जाप्पहावेण णं दंसेमि ।

(इति परिवृत्य चोलकान्तरादादाय चित्रपटं दर्शयति)

**प्रभावती** – (दृष्ट्वा साश्चर्यम्) (च) हला! कलहंसिए! ठाणे खु विह्मअक्खित्तं तुह हिअअं । अदिट्ठपुव्वं अस्सुदपुव्वं अ एआरिसं रूवं ।

**कलहंसिका** – (छ) किं तुह सही अत्थाणे विह्मिदा होइ ।

**प्रभावती** – (ज) सहि! इदं कस्स णाम महाभाअस्स पडिरूवं भवे ।

**कलहंसिका** – (झ) एदं भअवदो मअणस्स णूणं पडिबिम्बं होज्ज ।

**प्रभावती** – (ञ) सहि! साहु णिरूविदं । रइसहअरो एव्व देवो कुसुमाउहो आलक्खेसु लक्खिज्जइ ।

---

(क) निरतिशयसौन्दर्यगुणवासभवनं तत् कस्य हृदयं न विस्मापयति.

प्रतिमेव रतिपतेः प्रत्यादेश इव पूर्णिमाशशिनः ।
शृङ्गारस्येव जीवः केन कथ्यते जगति तद् रूपम् ॥

(ख) सखि! कलहंसिके! अनेन तव वचनेन तां रूपरचनां द्रष्टुमधिकं मे कौतूहलं वर्तते । कथमत्रानेतव्यम्.

(ग) अस्मिन् उपनीते किं पारितोषिकं प्रियसख्या दीयते.

(घ) यद्रोचते सख्यै.

(ङ) तद् आत्मनो विद्याप्रभावेण ननु दर्शयामि.

(च) सखि! कलहंसिके! स्थाने खलु विस्मयाक्षिप्तं तव हृदयम् । अदृष्टपूर्वमश्रुतपूर्वं चैतादृशं रूपम्.

(छ) किं तव सखी अस्थाने विस्मिता भवति.

(ज) सखि! इदं कस्य नाम महाभागस्य प्रतिविम्बं भवेत्.

(झ) एतद् भगवतो मदनस्य नूनं प्रतिबिम्बं भवेत्.

(ञ) सखि! साधु निरूपितम् । रतिसहचर एव देवः कुसुमायुध आलेख्येषु लक्ष्यते.

**कलहंसिका** – (क) एव्वं एदं । इमस्स रूवादिसअस्स अण्णत्तासम्भावणाए मए एव्वं भणिदं ।

**प्रभावती** – (ख) सहि! इदं कस्स रूवं केण वा लिहिदं ति कहं जाणिदव्वं ।

**कलहंसिका** –(ग) पिअसहि! कआ वि णूणं अत्तणो हिअअवल्लहो आलिहिदो भवे।

**प्रभावती** – (घ) हला! एसा आकिदी कहं इत्थिआए अक्खलिअहिअआए एव्वं अविअलं आलिहिदव्वा ।

**कलहंसिका**– (ङ) जदि एव्वं, इदं तस्स एव्व कलाकुसलस्स अय्यभद्दणडस्स विण्णाणं ति चिन्तेमि ।

**प्रभावती** – (च) हला! तेण वि एत्थ सन्तो एव्व कोऽवि आलिहिदो, अह वा बुद्धिविहवणिम्मिओ ।

**कलहंसिका** – (छ) पिअसहि! एस सण्णिवेसो कस्स हिअअस्स पडिहादि। ता कहिं वि अत्थि एव्व । विचित्तं खु पआवइणो णिम्माणं ।

**प्रभावती** – (ज) ता अय्यभद्दणडं एव्व हक्कारिअ पुच्छामो।

**कलहंसिका** – (झ) तह करह्म ।

**प्रभावती** – (नेपथ्याभिमुखमवलोक्य) (ञ) हञ्जे! मदणिए!

(प्रविश्य)

**प्रतीहारी** (सप्रणामम्) (ट) आदिसदु भट्टिदारिआ ।

**प्रभावती** (ठ) मदणिए! अय्यभद्दणडो आणीअदु ।

---

(क) एवमेतद् । अस्य रूपातिशयस्यान्यत्रासम्भावनया मयैवं भणितम्.
(ख) सखि! इदं कस्य रूपं केन वा लिखितमिति कथं ज्ञातव्यम्.
(ग) प्रियसखि! कयापि नूनमात्मनो हृदयवल्लभ आलिखितो भवेत्.
(घ) सखि! एषाकृतिः कथं स्त्रियास्खलितहृदययैवमविकलमालेखितव्या.
(ङ) यद्येवामेदं तस्यैव कलाकुशलस्यार्यभद्रनटस्य विज्ञानमिति चिन्तयामि.
(च) सखि! तेनाप्यत्र सन्नेव कोऽप्यालिखितः । अथ वा बुद्धिविभवनिर्मितः.
(छ) प्रियसखि! एष सन्निवेशः कस्य हृदयस्य प्रतिभाति तत्कुत्राप्यस्त्येव । विचित्रं खलु प्रजापतेः निर्माणम्.
(ज) तद् आर्यभद्रनटमेवाकार्य पृच्छावः.
(झ) तथा कुर्वः.
(ञ) चेटि! मदनिके!
(ट) आदिशतु भर्तृदारिका.
(ठ) मदनिके! आर्यभद्रनट आनीयताम्.

**प्रतीहारी**—(क) जं भट्टिदारिआ आणवेदि। (निष्क्रान्ता)

(ततः प्रविशति प्रतीहार्योपदिश्यमानमार्गो भद्रनटः)

**भद्रनटः**—अहो दानवेन्द्र[1]महादेव्याः प्रभावतीं प्रति स्नेहातिशयः, यदियं तस्याः सङ्गीतविद्याग्रहणकौशलपरिज्ञानाय प्रतिकलं चेटिकाः प्रहिणोति। अदृष्टचर एव प्रभावत्याः प्रज्ञाप्रकर्षः।

सकृदपि मयोपदिष्टः शिक्षावसरे क्रियाक्रमस्तस्याः।
पात्रविशेषस्पृहया प्रायः सङ्क्रामति क्षणेनैव ॥ २ ॥

(सविमर्शम् आत्मगतम्) अनुष्ठितप्रायश्च मया स्वामिनो वसुदेवनन्दनस्य नियोगः। प्रवेशितस्तावन्मया परिगृहीतशैलूषभूमिको गदसाम्बसहितः सपरिजनः कुमारः प्रद्युम्नः। वशीकृतश्च प्रयोगदर्शनेन सपौरजनो दानवराजः। तन्नियुक्तश्च सङ्गीतविद्यां शिक्षयन् प्रभावत्या विस्रम्भपात्रमभवम्। प्राप्तश्चायमवसरः प्रद्युम्नगुणकीर्तनस्य। मया चेदानीं—

तथा तथा गुणा वाच्याः प्रद्युम्नस्य महात्मनः।
यथा यथा प्रभावत्या मनस्तत्र भवेत् स्थिरम् ॥ ३ ॥

किञ्च मया प्रद्युम्नप्रतिच्छन्दसनाथं चित्रपटमपहरन्तीं कलहंसिकामनिच्छतेवाभ्युपगतवता युक्तमेवानुष्ठितम्। सा कदाचित् प्रदर्शयेत् प्रभावत्यै चित्रपटम्। यदि च तया दानवराजपुत्र्या कुमारस्य प्रतिकृतिर्दृश्येत, तदा सिद्धमेव नः समीहितम्। (परितोऽवलोक्य प्रकाशम्) अहो खल्वियममितानुभावा दानवराजस्य राजधानी।

दिग्दन्तावलदन्तकाण्डमुसलैः क्लृप्तं बहिस्तोरणं
स्वर्बन्दीनयनाम्बुभिः परिसरोद्यानं नदीमातृकम्।
पातालेन्द्रफणोद्धृतैश्च मणिभिर्गेहेषु दीपक्रिया
वक्तुं वज्रपुरस्य वैभवमिदं कस्यास्ति वाग्विस्तरः ॥ ४ ॥

तस्य दानवचक्रवर्तिनः सर्वपथीनमोजायितम्।

किङ्कुर्वाणः श्रयति भवनं यस्य गीर्वाणनाथः
क्रीडोद्यानं भजति वरुणस्तोयकर्मान्तिकः सन्।

(क) यद् भर्तृदारिका आज्ञापयति.

१. 'न्द्रस्य म' ग. पाठः

कोशागारे निधिपरिवृढो मौद्रिकः सन्निधत्ते
नासीराग्रचः सरति च पुरो दण्डयात्रासु मृत्युः ॥ ५ ॥

(परिक्रामन्) मदनिके! प्रमदवनमार्गमादेशय ।

**प्रतीहारी** – (क) इदो इदो अय्यो । (भद्रनटः प्रवेशं नाटयति)

**कलहंसिका** – (दृष्ट्वा ससम्भ्रमम्) (ख) अअं अय्यभद्दणडो परावडिदो एव्व । ता इदं चित्तवडं पच्छादेमि । (तथा करोति)

**भद्रनटः** – (अग्रतो निर्वर्ण्य) इयमत्र दानवराजपुत्री कलहंसिकया सह किमपि मन्त्रयमाणा तिष्ठति । यावदुपसरामि । (उपसृत्य) भद्रे! प्रभावति! भवतु ते मनोरथसिद्धिः ।

**कलहंसिका** – (ग) अय्यस्य पसादेण सिज्झइ एव्व पिअसहीए सव्वो मणोरहो ।

**प्रभावती** – (सप्रश्रयम्) (घ) इदं आसणं । उवविसदु अय्यो । (भद्रनट उपविशति)

**प्रभावती** – (प्रतीहारीमालोक्य) (ङ) मदणिए! अत्तणो णिओअं अणुचिट्ठ ।

**प्रतीहारी** –(च) जं भट्टिदारिआ आणवेदि । (निष्क्रान्ता)

**भद्रनटः** —

कलकण्ठकलालापा कुसुमस्मितशोभिनी श्यामा ।
प्रमदवनवाटिकेयं भद्रे त्वामनुकरोतीव ॥ ६ ॥

**प्रभावती** – (अपवार्य) (छ) कलहंसिए! अय्यभद्दणडो पडिच्छन्दवुत्तन्तं कहं पुच्छिदव्वो ।

**कलहंसिका** – (विमृश्य) (ज) अहं एव्व पुच्छामि । (प्रकाशम्) अय्य! दाणिं तुमं किं वि पुच्छिदुं इच्छामो ।

**भद्रनटः** – किमिव ।

---

(क) इत इत आर्यः.

(ख) अयमार्यभद्रनटः परापतित एव । तदिदं चित्रपटं प्रच्छादयामि.

(ग) आर्यस्य प्रसादेन सिध्यत्येव प्रियसख्याः सर्वो मनोरथः.

(घ) इदमासनम् । उपविशत्वार्यः.

(ङ) मदनिके! आत्मनो नियोगमनुतिष्ठ.

(च) यद् भर्तृदारिका आज्ञापयति.

(छ) कलहंसिके! आर्यभद्रनटः प्रतिच्छन्दवृत्तान्तं कथं प्रष्टव्यः.

(ज) अहमेव पृच्छामि । आर्य! इदानीं त्वां किमपि प्रष्टुमिच्छावः.

**कलहंसिका** -- (क) अय्य ! इमं सअलं वि तिहुवणं सञ्चरइ भवम् । एत्थ जइ णी-सामण्णरूवउणो तुए को वि आइदिविसेसो दिट्ठो, ता को सो कहिज्जउ ।

**भद्रनटः** -- (स्वगतम्) अयमेवास्मद्विवक्षितस्य समुचितः समयः । एवन्तावत् । (प्रकाशं प्रभावतीं निर्दिश्य) किमिह कथनीयम् । नन्वसौ दृश्यत एव ।

(प्रभावती लज्जां नाटयति)

**कलहंसिका** -- (सोत्प्राशम्) (ख) अय्य ! साहु भणिअं । किं अत्थि एआरिसरूवो पुरिसो ।

**भद्रनटः** --

अस्ति त्रिलोकमहितान्वयलब्धजन्मा
काश्चिद्युवा भुजकदर्थितवैरिलोकः ।
शंसन्ति यं युवतयः समवेक्ष्य साक्षात्
सौन्दर्यसारसदनाङ्गमनङ्गमेव ॥ ७ ॥

**प्रभावती** -- (ग) किं सो देवो उद दाणओ आदु माणुसो ।

**भद्रनटः** --

देवेषु देवः सुश्रोणि ! दानवेषु च दानवः ।
मानुषेषु च धर्मात्मा मानुषः स महाबलः ॥ ८ ॥

**कलहंसिका** -- (घ) कं उण लोअं सो अलङ्करेइ ।

**भद्रनटः** --

असौ चन्दनकर्पूरमल्लिकामौक्तिकत्विषा ।
साम्प्रतं कीर्तिसम्पत्त्या प्रसाधयति मेदिनीम् ॥ ९ ॥

**कलहंसिका** -- (ङ) तस्स महाभाअस्स पहवं णामहेअं च कहेदु भवम् ।

**भद्रनटः** -- तर्हि श्रूयताम् --

चाटूक्तिभङ्गिचतुरैश्चतुराननाद्यै-
रभ्यर्थितः सुरगणैरवनीमुपेतः ।

---

(क) आर्य ! इदं सकलमपि त्रिभुवनं सञ्चरति भवान् । अत्र यदि निस्सामान्यरूपगुणस्त्वया कोऽप्याकृतिविशेषो दृष्टः, तत् कः स कथ्यताम् .

(ख) आर्य ! साधु भणितम् । किमस्त्येतादृशरूपः पुरुषः.

(ग) किं स देव उत दानवः अथवा मानुषः.

(घ) कं पुनर्लोकं सोऽलङ्करोति.

(ङ) तस्य महाभागस्य प्रभवं नामधेयं च कथयतु भवान्.

वंशे महीयसि यदोर्विहितावतारः
संक्रीडते शमितशत्रुकुलो मुकुन्दः ॥ १० ॥

**प्रभावती** – (क) 'भअवं सिरीवल्लहो वसुदेवणन्दणो भविअ दुवारवइं अहिचिट्ठइ' त्ति सुदं मए तादसमीववट्टिणीए महेसिणो णारदस्स मुहादो ।

**कलहंसिका** -- (ख) तदो तदो ।

**भद्रनटः** —

समस्तमन्तर्भुवनं दधानात् तस्मादुदारः सुमनोभिनन्द्यः ।
प्रद्युम्ननामा तनयो बभूव पत्युर्नदीनामिव पारिजातः ॥ ११ ॥

**प्रभावती** – (जनान्तिकम्) (ग) हला ! सुणिज्जइ एव्वं मए अहिरूवजुवप्पसंगेसु गोत्तजरदीहिं कहिज्जन्तो सो महाभाओ ।

**कलहंसिका** -- (साकूतास्मितम्) (घ) पिअसहि ! इमं पज्जुण्णं हिअए धारअन्तीए खु तुए सअंवरागदो सव्वो वि जुवजणो ओहीरिदो ।

(प्रभावती सासूयमिव पश्यति)

**भद्रनटः** -- (आत्मगतम्) एषा कुमारस्य प्रद्युम्नस्य गुणाकर्णनेन विकसितनयनाम्बुजा कमपि दशाविशेषमनुभवतीव । तदहमस्य गुणानेव कीर्तयामि ।

(प्रकाशम्)

सौन्दर्यराशिरखिलोऽपि चराचरेषु
प्रायो बभूव परमाणुरमुष्य सृष्टौ ।
नो चेदसाविव जगत्रयमोहनश्रीः
सृज्येत कश्चिदपरोऽपि च तेन धात्रा ॥ १२ ॥

**प्रभावती** –(अपवार्य साशंसम्) (ङ) अवि णाम सो च्चेअ एसो चित्तगओ होज्जइ ।

**कलहंसिका** -- (सोत्प्राशम्) (च) जंसच्चं सो च्चेअ दे चित्तगओ ।

---

(क) 'भगवान् श्रीवल्लभो वसुदेवनन्दनो भूत्वा द्वारवतीमधितिष्ठति' इति श्रुतं मया तातसमीपवर्तिन्या महर्षेः नारदस्य मुखात्.

(ख) ततस्ततः.

(ग) सखि! श्रूयत एवं मयाभिरूपयुवप्रसङ्गेषु गोत्रजरतीभिः कथ्यमानः स महाभागः.

(घ) प्रियसखि ! इमं प्रद्युम्नं हृदये धारयन्त्या खलु त्वया स्वयंवरागतः सर्वोऽपि युवजनोऽवधीरितः.

(ङ) अपि नाम स एवैष चित्रगतो भविष्यति.

(च) यत्सत्यं स एव ते चित्तगतः.

**प्रभावती** -- (रोषं नाटयित्वा) (क) अवेहि परिहाससीले ! अवेहि । णं भणामि 'एसो आलेक्खगओ सो पज्जुण्णो भवे' त्ति ।

**कलहंसिका** -- (प्रकाशम्) (ख) अय्य ! केरिसो सो ।

**भद्रनटः** -- स खलु मया कथमीदृश इति वर्ण्येत ।

अनितरसामान्यानां कुलभवने शीलवैभवगुणानाम् ।
उपमानजातमखिलं यस्मिन्नुपमेयभावमुपयाति ॥ १३ ॥

**प्रभावती** -- (जनान्तिकम्) (ग) हला ! कलहंसिए ! किं इमिणा पडिच्छन्दएण सो सरिसो त्ति अय्यभद्दणडं पुच्छ ।

**कलहंसिका** --(घ) तह । (प्रकाशम्) अय्य इमं पडिरूवं णं तस्स किं उवमाणम् । (इति चित्रपटं दर्शयति)

**भद्रनटः** -- (सहर्षमात्मगतम्) दिष्ट्या यथाचिन्तितमेव संवृत्तम् । (प्रकाशम्) तस्यैव कुमारस्य प्रतिकृतिरियम् ।

**प्रभावती** -- (सानन्दम् आत्मगतम्) (ङ) हिअअ ! दिट्ठिआ वड्ढासि, जदो बहुसो सुणिज्जन्तरूवगुणस्स जस्स दंसणं तुए अहिलसिदं, तस्स पडिकिदी दाणीं दिट्ठा । (तत्पूर्वमिव चित्रपटं सानुरागं पश्यति)

**कलहंसिका** -- (अपवार्य) (च) पिअसहि ! फलिदो अह्माणं मणोरहो ।

**प्रभावती** -- (छ) अय्य ! किं णिमित्तं तुए इमो आलिहिदो ।

**भद्रनटः** -- तस्य महाभागस्य विश्लेषतप्तमात्मानं निर्वापयितुम् ।

तच्चक्षुर्यदमुष्य तादृशमहो रूपं समुद्वीक्षते
तच्छ्रोत्रं वचनामृतं पिबति यत् सारं रसाम्भोनिधेः ।
सा वाणी गुणसम्पदं वदति या सद्भावसीमाभुवं
तच्चेतश्च चराचरं त्रिभुवनं यत्तन्मयं पश्यति ॥ १४ ॥

---

(क) अपेहि परिहासशीले ! अपेहि । ननु भणामि 'एष आलेख्यगतः स प्रद्युम्नो भवेद्' इति.

(ख) आर्य ! कीदृशः सः.

(ग) सखि ! कलहंसिके ! किमनेन प्रतिच्छन्दकेन स सदृश इति आर्यभद्रनटं पृच्छ.

(घ) तथा । आर्य ! इदं प्रतिरूपं ननु तस्य किमुपमानम्.

(ङ) हृदय ! दिष्ट्या वर्द्धसे, यतो बहुशः श्रूयमाणरूपगुणस्य यस्य दर्शनं त्वयाभिलषितं, तस्य प्रतिकृतिरिदानीं दृष्टा.

(च) प्रियसखि ! फलितोऽस्माकं मनोरथः.

(छ) आर्य ! किंनिमित्तं त्वयायमालिखितः.

**प्रभावती**—(आत्मगतम्) (क) अहो पुरिसा अवि तस्स विरंहं विसहिदुं न पारेन्ति, किं उण अबलाओ।

**कलहंसिका**—(ख) अय्य! सो महाणुभावो णिएण एव्व रूवेण कहं दट्ठव्वो।

**भद्रनटः**—स खलु कुमारः सम्प्रति द्वारवतीमध्यास्ते।

**प्रभावती**—(अपवार्य) (ग) हला! दूरट्ठिए तस्सिं अह्माणं मणोरहो कहं सहलो होज्ज।

**कलहंसिका**—(घ) सहि! मा एव्वं भण। सहलो एव्व भविस्सदि, जदो महेसिणा दुव्वासेण 'जस्सिं तुमं बद्धभावा, सो दे भत्ता भविस्सदि'त्ति दिण्णो तुह वरो।

**प्रभावती**—(सप्रार्थनम्) (ङ) सहि! एत्थ अप्पडिहअं तस्स महामुणिणो वअणं होदु।

**कलहंसिका**—(च) किं एदं पत्थणिज्जं। (प्रकाशम्) अय्य! सव्वाआररमणिज्जस्स तस्स दूरदेसणिवासो अह्माणं हिअअं दूमेइ।

**भद्रनटः**—यदि तस्य दर्शने कुतूहलं, तत् कतिपयैरेव दिवसैर्मम विद्याप्रभावेण तं कुमारमिहानयामि।

**प्रभावती**—(साशंसमात्मगतम्) (छ) अवि णाम सो महाभाओ एत्थ समागदो भवे।

(प्रविश्य)

**प्रतीहारी**—(सप्रणामम्) (ज) भट्टिदारिए! एसो उवट्ठिदो।

**प्रभावती**—(सवितर्कम्) (झ) को णु खु सो।

(क) अहो पुरुषा अपि तस्य विरहं विसोढुं न पारयन्ति, किं पुनरबलाः.

(ख) आर्य! स महानुभावो निजेनैव रूपेण कथं द्रष्टव्यः.

(ग) सखि! दूरस्थिते तस्मिन् अस्माकं मनोरथः कथं सफलो भवेत्.

(घ) सखि! मैवं भण। सफलमेव भविष्यति। यतो महर्षिणा दुर्वाससा 'यस्मिंस्त्वं बद्धभावा, स ते भर्ता भविष्यति' इति दत्तस्तुभ्यं वरः.

(ङ) सखि! अत्राप्रतिहतं तस्य महामुनेर्वचनं भवतु.

(च) किमेतत् प्रार्थनीयम्। आर्य! सर्वाकाररमणीयस्य तस्य दूरदेशनिवासोऽस्माकं हृदयं दुनोति.

(छ) अपि नाम स महाभागोऽत्र समागतो भवेत्.

(ज) भर्तृदारिके! एष उपस्थितः.

(झ) को नु खलु सः.

१. 'हं खु स' ग-पाठः.

२. 'हाणुभा' ग-पाठः.

**प्रतीहारी** – (क) देवीए कञ्चुई वरदत्तो ।

**प्रभावती** – (ख) मदणिए ! णं अविलम्बिअं पवेसअ ।

**प्रतीहारी** – (ग) जं भट्टिदारिआ आणवेदि (निष्क्रान्ता)

(प्रविश्य)

**काञ्चुकीयः** – जयतु भवती । भद्रे ! उद्यानरत्ननाम्नः पुत्रीकृतस्य बालसहकारस्य प्रथमकुसुमोदयमहोत्सवमनुभवितुं देवी त्वां प्रतिपालयन्ती तिष्ठति ।

**कलहंसिका** – (घ) जाव अह्मे देवीसआसं गच्छह्म ।

**प्रभावती** – (अपवार्य) (ङ) हला ! इदं मे हिअअस्स आसासइत्तअं चित्तवडं पच्छादअन्ती आअच्छ ।

**भद्रनटः** —

किसलयदर्शितरागस्तरुणः सहकारपादपः सैषः ।
आमोदयिष्यति त्वामचिराय नवेन पुष्पहासेन ॥ १९ ॥

( निष्क्रान्ताः सर्वे )

इति द्वितीयोऽङ्कः ।

---

(क) देव्याः कञ्चुकी वरदत्तः.
(ख) मदनिके ! नन्वाविलम्बितं प्रवेशय.
(ग) यद् भर्तृदारिका आज्ञापयति.
(घ) यावदावां देवीसकाशं गच्छावः.
(ङ) सखि ! इमं मे हृदयस्याश्वासयितृकं चित्रपटं प्रच्छादयन्त्यागच्छ.

## अथ तृतीयोऽङ्कः ।

(ततः प्रविशति भद्रनटः)

**भद्रनटः** – (सपरितोषम्)

आकर्ण्य शम्बररिपोः परमाभिरूप्यं
दृष्ट्वा च तत्प्रतिकृतिं दनुजेन्द्रपुत्री ।
कामेन कामपि दशामनुभाव्यमाना
यावत्समापयति सा हृदयस्थितं मे ॥ १ ॥

आवेदितश्च मया गगनपथसञ्चारिणा भगवतः कृष्णस्य वज्रपुरवृत्तान्तः । किञ्च सोऽपि कुमारः प्रद्युम्नः प्रभावत्याः सौन्दर्यादिगुणसम्पदम् आत्मविषयमनुरागातिशयं च मन्मुखेन श्रुत्वा सम्प्रति तद्दर्शनमेवाभिकाङ्क्षति । (सविमर्शम्) तदहमिदानीं केनोपायेन तां कुमारस्य दृष्टिपथं नेष्यामि । (सस्मरणम्) समादिष्टोऽस्मि किल साम्प्रतम् 'अद्यास्मिन्वसन्तोत्सवे कोऽपि प्रबन्धः प्रयुज्यताम्' इति देवेन वज्रणाभेन । तन्महर्षिणा नारदेन विरचितं रम्भाभिसरणं नाम प्रेक्षणकं यावदभिनयामि । इह च मया कुमारः प्रद्युम्नो नलकूवरभूमिकां ग्राहयितव्यः । अहं पुनस्तस्य विदूषको भविष्यामि । मनोवती च रम्भा भविष्यति । अयमेवोपायः कुमारस्य प्रभावतीदर्शने । अपि चात्र नलकूबरमभिसरन्तीं रम्भामवलोकयन्त्या दानवराजपुत्र्या मनस्तस्य प्रद्युम्नस्य सङ्गमे स्वयमेव प्रवर्तेत । (पुरतोऽवलोक्य) कथमियं प्रभावत्याः प्रियसखी कलहंसिका । यावदस्यास्तदवस्थामवगच्छामि ।

(प्रविश्य)

**कलहंसिका** -- (सखेदम्) (क) हन्त कइआ णु एस पिअसहीए णिव्वाहीअइ मअणसन्दावो ।

**भद्रनटः** – (उपसृत्य) अयि ! कलहंसिके ! अपि कुशलं तव प्रियसख्याः ।

**कलहंसिका** -- (ख) जइ परं अय्यस्स पसादो होज्ज ।

**भद्रनटः** -- किं निर्विण्णेव कथयसि ।

---

(क) कदा नु एष प्रियसख्या निर्वाप्यते मदनसन्तापः.

(ख) यदि परमार्यस्य प्रसादो भवेत्

6297

**कलहंसिका** -- (क) अय्य ! महन्तो मम णिव्वेदो, जं तस्स पज्जुण्णस्स पडिरूव-दंसणादो आरहिअ वम्महपराहीणहिअआ कं वि दसाविसेसं अणुभवइ । जह—

मग्गं उज्झइ दाहिणस्स वउलामोआवहं वाउणो
उत्ताणेहि करेहि रुम्भइ वला उत्तम्मिरी चन्दिमम् ।
ओवाहेइ कहं वि सुण्णहिअआ आआमिणिं जामिणिं
पेक्खन्ती पडिरूवअं अणिमिसा तं एव्व सा चिट्ठइ ॥ २ ॥

अवि अ—

फंसेण व अच्चुण्हा मणम्मि कामग्गिणो जलन्तस्स ।
अहरपवालकिसलअं इमाए पव्वाअअन्ति णीसासा ॥ ३ ॥

**भद्रनटः** --युज्यत एव प्रभावत्याः प्रद्युम्ने भावबन्धः ।

**कलहंसिका** (ख) एत्थ णवरं अय्यस्स पक्खवादो एव्व पज्जुण्णदंसणूसुअहि-अआए पिअसहीए मअणसज्जरस्स सिसिरोवआरो ।

**भद्रनटः** — अयि ! कलहंसिके ! मैवं निर्विण्णा भव ।

चन्द्रं प्रदोष इव सर्वजनाभिनन्द्यं
प्रद्युम्नमेनमहमत्र हि दर्शयित्वा ।
अह्नाय तां कुमुदिनीमिव बद्धभावा-
मामोदयेयमसुराधिपतेस्तनूजाम् ॥ ४ ॥

**कलहंसिका** – (सहर्षम्) (ग) सहला होदु अय्यस्स एसा पडिण्णा ।

---

(क) आर्य ! महान् मम निर्वेदः, यत् तस्य प्रद्युम्नस्य प्रतिरूपदर्शनादारभ्य मन्मथपराधीन-हृदया कमपि दशाविशेषमनुभवति । यथा—

मार्गमुज्झति दक्षिणस्य वकुलामोदावहं वायोः
उत्तानाभ्यां कराभ्यां रुणद्धि बलादुत्ताम्यन्ती चन्द्रिकाम् ।
अपवाहयति कथमपि शून्यहृदया आयामिनीं यामिनीं
पश्यन्ती प्रतिरूपकमनिमिषा तदेव सा तिष्ठति ॥ २ ॥

अपि च

स्पर्शेनेवात्युष्णा मनसि कामाग्नेर्ज्वलतः ।
अधरप्रवालकिसलयमस्याः प्रम्लापयन्ति निश्वासाः ॥ ३ ॥

(ख) अत्र नवरमार्यस्य पक्षपात एव प्रद्युम्नदर्शनोत्सुकहृदयायाः प्रियसख्या मदनसंज्वरस्य शिशिरोपचारः.

(ग) सफला भवत्वार्यस्यैषा प्रतिज्ञा.

**भद्रनटः** – क्व पुनर्गम्यते भवत्या ।

**कलहंसिका** – अहं खु पिअसहीए तादो णाडअं दट्ठुं पेक्खामण्डवं गदो ण वेत्ति जाणिदुं णिउत्तह्मि । एसो देवो दाणिं पेक्खामण्डवं पत्थिदो । एदं पिअसहीए णिवेदिउं गच्छामि ।

**भद्रनटः** – तत् त्वरितमेव प्रभावतीं देवस्य सकाशमानय । अहमपि गृहीतनैपथ्यान् शैलूषानाहूय प्रयोगदर्शनोद्युक्तं देवमुपतिष्ठे । (इति निष्क्रान्तौ)

## मिश्रविष्कम्भकः ।

---

(ततः प्रविशति हंसेनानुगम्यमानो वज्रणाभः कलहंसिकाद्वितीया प्रभावती विभवतश्च परिवारः)

**वज्रणाभः** – (सावलेपम्)

आहर्तुमुद्यतवतः क्रतुमश्वमेधं
तातस्य तस्य वचनं यदि नान्तरायः ।
अद्यैव शक्रममरैरनुगम्यमानं
हत्वा ददामि बलिमाहवदेवतायै ॥ ५ ॥

स च जलाशयः सम्प्रति कृष्णावष्टम्भेन नितरां दृप्यति । (सावज्ञम्) किमनेन मनुष्यकीटेन । समाप्ते पुनस्तातकाश्यपस्य महाक्रतौ यथासमीहितमाचरिष्यामि ।

**हंसः** -- (स्मरणनाटितकेन सविषादम् आत्मगतम्) श्रुतं हि मया सुधर्मागतेन नारदमुखात् 'प्रद्युम्नेन वज्रणाभं घातयिष्यामीति कृष्णः प्रतिज्ञातवानि'ति । अयं पुनर्निजभुजावलेपमत्तः कृष्णमपि तृणाय मन्यते । किमत्र भविष्यतीति सम्प्रमुग्धोऽस्मि । अथवा वज्रणाभः खल्वसौ । (प्रकाशम्)

तुभ्यं दानवसार्वभौम ! भुवने प्राचीनदैत्याधिप-
श्लाघालङ्घनजाङ्घिकैर्गुणगणैः श्रेष्ठाय तिष्ठेत कः ।
क्षिप्तं हस्तिपकैः पुरो न हि यवग्रासं करैर्गृह्णते
यद्बाहोरनुचिन्त्य विक्रमविधिं दिक्पालदन्तावलाः ॥ ६ ॥

**वज्रणाभः** -- भोश्चारणपते ! उच्यतां सपरिजनो भद्रनटः 'प्रस्तूयतां प्रयोग' इति ।

---

(क) अहं खलु प्रियसख्यास्तातो नाटकं द्रष्टुं प्रेक्षामण्डपं गतो न वेति ज्ञातुं नियुक्तास्मि । एष देव इदानीं प्रेक्षामण्डपं प्रस्थितः । एतत् प्रियसख्यै निवेदयितुं गच्छामि.

**प्रभावती**--(अपवार्य) (क) हला! कलहंसिए! दाणिं अह्माणं मणोरहसिद्धिकालणं अय्यभद्दणडो दक्खिस्सदि ।

**कलहंसिका** -- (ख) पिअसहि! अइरेण व्व इमस्स पक्खवादेण तुह मणोरहो वि दिट्ठिवहं ओआरिस्सदि ।

**हंसः** -- (नेपथ्याभिमुखमवलोक्य) अयि! भद्रनट! एष दानवचक्रवर्ती प्रेक्षणकदर्शनकृतक्षणस्तिष्ठति । तदारभ्यताम् ।

(प्रविश्य)

**सूत्रधारः** —

देवः स जयति जगतां मान्यः शृङ्गारदैवतं मदनः ।
यच्छक्त्या वपुरासीच्छम्भोः शैलेन्द्रकन्यकाशबलम् ॥ ७ ॥

**हंसः** — देव! प्रस्तुतं, यदियं द्वादशपदा नान्दी प्रवर्तिता ।

**सूत्रधारः** — तत्रभवतः कमलयोनिजन्मनो देवर्षेर्नारदस्य कृतिं रम्भाभिसरणं नाम प्रेक्षणकं प्रयोक्ष्ये । ततः काश्यपवंशमुक्तामणिना भरतविद्यापारीणेन देवेन वज्रपुरपरमेश्वरेण दीयतामवधानम् ।

**वज्रणाभः** — इह कृतावधाना एव वयम् ।

**सूत्रधारः** —

देव! दनुजाधिप! त्वां त्रिभुवनलक्ष्मीरिव स्वयं रागात् ।
अभिरूपमभिसृतवती नलकूवरमत्र नाटके रम्भा ॥ ८ ॥

**कलहंसिका** — (अपवार्य साकूतस्मितम्) (ग) पिअसहि! एसो एव्व मग्गो मअणपरवसाणं इत्थिआणं ।

(प्रभावती अधोमुखी स्मयते)

**सूत्रधारः**— (समन्तादवलोक्य) अहो समुचितकारिता भगवतः सहस्रभानोः । यतः—

सायन्तनास्थानमधिष्ठितेऽद्य
दिदृक्षया प्रेक्षणकस्य देवे ।

---

(क) सखि! कलहंसिके! इदानीमस्माकं मनोरथसिद्धिकारणमार्यभद्रनटो द्रक्ष्यते.
(ख) प्रियसखि! अचिरेणैवास्य पक्षपातेन तव मनोरथोऽपि दृष्टिपथमवतरिष्यति.
(ग) प्रियसखि! एष एव मार्गो मदनपरवशानां स्त्रीणाम्.

---

१. 'सारं ना' क-ख. पाठः

निह्नुत्य तापं निजमंशुमाली
पतत्ययं पश्चिमवारिराशौ ॥ ९ ॥

(द्वितीयेन नेपथ्ये)

दिवसकरतापखिन्नः समधुकरः कैरवाकरो रक्तः ।
प्रतिपालयति रजन्याः समागमं चन्द्रहासिन्याः ॥ १० ॥

**सूत्रधारः**—कथमुपक्रान्तं भरतपुत्रैः । यदियं रम्भागमनं प्रतिपालयतो विदूषकद्वितीयस्य नलकूबरस्य प्रावेशिकी ध्रुवा । तदहमप्यनन्तरभूमिकाग्रहणाय साधयामि । (निष्क्रान्तः)

## स्थापना ।

(ततः प्रविशति विदूषकेण सह नलकूबरः ।)

**नलकूबरः**—(समन्तात् पश्यन् अपवार्य सविस्मयानन्दम्) सखे! भद्रनट!

लक्ष्मीः किं धुतपद्मा ज्योत्स्ना किं चन्द्रविश्लिष्टा ।
किं वा रतिर्वियुक्ता मदनेन मनोरमा केयम् ॥ ११ ॥

**विदूषकः**—ननु रतिरेवैषा हृदयगतेन भवता संयुक्ता च ।

**नलकूबरः**—भद्रनट! अपि सैवेयमस्मन्मानसराजहंसी प्रभावती ।

**विदूषकः**—आम सैवेयं सौन्दर्यसारमूलनीवी वज्रणाभकुलमङ्गलदीपिका ।

**नलकूबरः**—(सानुरागम्)

कान्तामेनां श्रुतवते कर्णाय स्पृहयालुना ।
मनोरथश्चिराल्लब्धः पश्यता मम चक्षुषा ॥ १२ ॥

**विदूषकः**—कुमार! अलमतिप्रसङ्गेन, यावत् प्रकृतमनुसरावः ।

**नलकूबरः**—(आकारसंवरणं नाटयन् प्रकाशम्) सखे! भद्राङ्क! इदं चैत्ररथसम्भूतं सङ्केतलतामण्डपं प्रविष्टानामस्माकं महती खलु वेला । कथं नाद्याप्यमरलोकवैजयन्ती मे प्रियतमा समागच्छति । (सोत्कण्ठम्)

मान्येन चैत्ररथकाननमारुतेन सन्धुक्षितस्मरहुताशनतप्तगात्रम् ।
निर्वापयिष्यति कदा नु नितम्बिनी सा पाटीरपङ्कशिशिरैः परिरम्भणैर्माम् ॥

**प्रभावती**—(अपवार्य) (क) हला! धण्णा खु सा इत्थिआ, जा दइएण एव्वं उक्कण्ठिज्जइ ।

---

(क) सखि! धन्या खलु सा स्त्री, या दयितेनैवमुत्कण्ठ्यते.

**कलहंसिका**– (क) पिअसहि! सो वि जुवा धण्णो, जो पिअदमाए सअं अभिसरिज्जइ ।

**वज्रणाभः**–(साश्चर्यम्)अहो भद्रनटस्य शैलूषपतेरभिनयचातुरी ।

स वेषः सा वचोभङ्गिस्तत्तत्त्वं तच्च चेष्टितम् ।
नलकूबर एवायं पश्यतः प्रतिभाति मे ॥ १४ ॥

**हंसः**–देव! किमुच्यते । यस्यायमनुकरोति, मुनिजनवरप्रभावात् तत्त्वेनैव प्रेक्षकाणां प्रतिभासते ।

**विदूषकः**– (ख) अलं दाव ताए अणागदाए । अज्ज उण आगदाए सअलजणाणन्दइत्तिआए इमाए चन्दिमाए अत्ताणं णिव्वावेहि ।

**नलकूबरः**–मूर्ख! न साधु भणितम् ।

यदितो वियोगतप्ते देहे चन्द्रातपं दीप्तम् ।
अविषह्यपातमार्द्रे कलयाम्यधुना क्षते क्षारम् ॥ १५ ॥

**प्रभावती**–(आत्मगतम्) (ग) सच्चं दूसहो एव्व चन्दाअवो उक्कण्ठिआणं ।

**विदूषकः**–(अपवार्य साकूतस्मितम्) कुमार! प्रभावत्यामुत्कण्ठमानस्य तवावस्थासूचनोचितमभिनेयवस्तु दिष्ट्या समापतितम् ।

**नलकूबरः**–भद्र[१]! न खलु दिष्ट्या, किन्तु भवतो बुद्धिवैभवेन ।

**विदूषकः**–(घ) वअस्स! मम उण बह्मणीविउत्तस्स कहं सुहाअ होदि चन्दिमा ।

**नलकूबरः**–(सस्मितम्) इह हि को नाम भवानिव धीरः । मम हृदयजीवातुः केन चिरायते रम्भा ।

**विदूषकः**-- (ङ) सुरलोआदो इमं केलाससिहरं आवडन्ती सा तुह वल्लहा केण वि पिसाएण वा रक्खसेण वा अन्तरा गहिदत्ति तक्केमि ।

(क) प्रियसखि! सोऽपि युवा धन्यो, यः प्रियतमया स्वयमभिस्रियते.
(ख) अलं तावत् तया अनागतया । अद्य पुनरागतया सकलजनानन्दयित्र्या अनया चन्द्रिकया आत्मानं निर्वापय.
(ग) सत्यं दुस्सह एव चन्द्रातप उत्कण्ठितानाम्.
(घ) वयस्य! मम पुनर्ब्राह्मणीवियुक्तस्य कथं सुखाय भवति चन्द्रिका.
(ङ) सुरलोकादिदं कैलासशिखरमापतन्ती सा तव वल्लभा केनापि पिशाचेन वा राक्षसेन वान्तरा गृहीतेति तर्कयामि.

१. 'सखे! भ' ग-पाठः.

**नलकूबरः**--(सगर्वम्) पिशाचेषु राक्षसेषु वा को नामास्मत्परिग्रहमङ्गीकरिष्यति।

(नेपथ्ये)

(क) णाह! परित्ताआहि परित्ताआहि।

**वज्रणाभः**--(आकर्ण्य ससम्भ्रमं सरोषञ्च) क एष मयि तिष्ठति वज्रणाभे पराभिद्रवं करोति धनुर्धरः।

**हंसः**--महाराज! नाटकमिदम्। अलमत्र संरम्भेण। इयं हि नलकूबरमभिसरन्ती रम्भा मध्येमार्गं रावणेनाभिभूयमाना स्ववल्लभं शरणमाक्रन्दति। त्वयि शासितरि को नाम भयावकाशः प्रजानाम्। सम्प्रति हि—

निरन्तरायं परिपालितानि भुजेन ते वज्रपुरीभुजङ्ग!।
अवाप्तकामान्यकुतोभयानि तृप्तिं चिरादश्नुवते जगन्ति॥ १६॥

(वज्रणाभः सलज्जं तिष्ठति)

**नलकूबरः**--(श्रवणनाटितकेन नेपथ्याभिमुखमवलोक्य सावेगम्)

म्लानच्छविर्गमनवेगतरङ्गिताङ्गी[1]
मत्तद्विपेन लुलिता वनदीर्घिकेव।
सैषा भयातिशयचञ्चलनेत्रमीना
दुःखाकरोति हृदयं सुरसुन्दरी मे॥ १७॥

(प्रविश्य सम्भ्रान्ता)

**रम्भा**-- (ख) णाह! परित्ताआहि परित्ताआहि। (इति पादयोः पतति)

**नलकूबरः**--(ससम्भ्रममुत्थाप्य) भीरु! नलकूबरे तिष्ठति कुतः परित्रातव्या भवती।

**रम्भा**--(ग) णाह! इमादो रक्खसवइणो दसकण्ठादो।

**नलकूबरः**--प्रिये! तव किमपराद्धमनेन रावणहतकेन।

**रम्भा**- (घ) णाह! एत्थ तुह सआसं आअच्छन्ति एसो दुट्ठरक्खसो मं अभिद्दवइ।

**वज्रणाभः**--हहह! दुरात्मनो दशमुखस्य विषयचापलम्।

---

(क) नाथ! परित्रायस्व परित्रायस्व.
(ख) नाथ! परित्रायस्व परित्रायस्व.
(ग) नाथ! अस्माद् राक्षसपतेर्दशकण्ठात्.
(घ) नाथ! अत्र तव सकाशमागच्छन्तीमेष दुष्टराक्षसो मामभिद्रवति.

---

१. 'गाविकाम्पिताङ्गी' ग.पाठः.

**विदूषकः**-- (क) सुदं एव्व केलासोवसल्ले परिकप्पिअसेणाणिवेसो णिवसइ रावणो त्ति ।

**नलकूबरः**-- (नेपथ्याभिमुखमवलोक्य सरोषावष्टम्भम्) अरे! अरे! अनात्मज्ञ! पुलस्त्यकुलपांसन! राक्षसापशद! ममापि नाम वल्लभां किमभिद्रवसि ।

नवभिरेव पुरा परितोषितो
निशिचरेन्द्र! हरस्तव मौलिभिः ।
अहमसौ युधि तं शरखण्डितै-
र्दशभिरप्यशनैः परितोषये ॥ १८ ॥

**वज्रणाभः**--अहो महानहङ्कारः कुबेरात्मजस्य ।

**विदूषकः**-- (ख) वअस्स! अलं संरम्भेण । एसो खु रक्खसहदओ तुह वअणं अनाअण्णन्तो विअ परम्मुहो गच्छइ ।

**नलकूबरः**--न खल्वनभिमुखेऽस्मिंश्चापस्याधिकारः, अस्ति पुनः परकलत्रदूषकेऽमुष्मिन् शापस्य । (शापोदकं गृहीत्वा) अयि भोः! राक्षसाधम!

यदा गृह्णासि भोगेच्छुरनिच्छां कामपि स्त्रियम् ।
तदा ते शतधा मूर्धा भिन्नो भुवि पतिष्यति ॥ १९ ॥

(इति मुञ्चति)

**हंसः**--अनुभवतु दुराशयोऽयमात्मनो दुर्नयस्य फलम् ।

(नेपथ्ये पुष्पवृष्टिर्दुन्दुभिध्वनिश्च)

**विदूषकः**-- (ग) भो! वअस्स! परवहूवन्दिग्गहिणो रावणस्स तुए विइण्णं सावं अणुमोदन्ति एदे वेमाणिआ ।

**नलकूबरः**–सखे! भद्राङ्क!

वात्यानिलेनेव दशाननेन
बलीयसा व्याकुलिताङ्गयष्टिः ।
रम्भेव सम्प्रत्यपि पश्य रम्भा
कम्पोत्तरां कामपि यात्यवस्थाम् ॥ २० ॥

---

(क) श्रुतमेव कैलासोपशल्ये परिकल्पितसेनानिवेशो निवसति रावण इति.

(ख) वयस्य! अलं संरम्भेण । एष खलु राक्षसहतकस्तव वचनमनाकर्णयन्निव पराङ्मुखो गच्छति.

(ग) भो! वयस्य! परवधूबन्दिग्राहिणे रावणाय त्वया वितीर्णं शापं अनुमोदन्त एते वैमानिकाः.

**विदूषकः**--(क) वअस्स! जाव णं भअपज्जाउलहिअअं आसासेहि ।

**नलकूबरः**--(रम्भामाश्लिष्य)

आयि! भीरु! विमुञ्च साध्वसं
　पुरतास्तिष्ठति दास एष ते ।
स गतः पिशिताशनाधमः
　सकृदुन्मीलय दृष्टिमायताम् ॥ २१ ॥

**हंसः**--देव! पर्यवसितप्रायमिदानीं प्रेक्षणकम् ।

**रम्भा**--(समाश्वस्य) (ख) णाह! दाणिं इमिणा तुह वअणामुएण वोलीणो एव्व मे सज्झसविसवेओ ।

**नलकूबरः**--प्रिये! किं ते भूयः प्रियमुपहरामि ।

**वज्रणाभः**--अनतिविस्तीर्णमभिनेयवस्तु ।

**रम्भा**--(ग) णाह! किं अदो वि परं पिअमत्थि ।

**नलकूबरः**--तथापीदमस्तु । (भरतवाक्यम्)

सर्वेऽपि सन्तः सह बन्धुवर्गैः
　श्रेयः समासाद्य चिरं रमन्ताम् ।
संस्थाय भूमौ दनुजाधिपो नः
　कामोपभोग्यां श्रियमातनोतु ॥ २२ ॥

(इति रम्भाविदूषकाभ्यां सह नलकूबरो निष्क्रान्तः)

**हंसः**--(आत्मगतम्) शान्तं पापं शान्तं पापं प्रतिहतममङ्गलवचनं, 'सबान्धवाः कुशलिनः क्रीडन्तु देवाः । वज्रणाभश्च मृतो भूत्वा स्वविभूतिं[1] प्रद्युम्नोपभोग्यां करोतु'त्यमङ्गलार्थव्यञ्जकमस्य शैलूषापशदस्य वचनम् । सर्वथा कुशलं भवतु देवस्य ।

**वज्रणाभः**--अहो आसेचनकमस्य भद्रनटस्य प्रयोगचातुर्यम् ।

**प्रभावती**--(जनान्तिकम्) (घ) हला! कलहंसिए! कहं सो महाभाओ मए समासादिदव्वो ।

---

(क) वयस्य! यावदेनां भयपर्याकुलहृदयामाश्वासय.

(ख) नाथेदनीमनेन तव वचनामृतेन प्रलीन एव मे साध्वसविषवेगः.

(ग) नाथ! किमतोऽपि परं प्रियमस्ति.

(घ) सखि! कलहंसिके! कथं स महाभागो मया समासादयितव्यः.

---

१. 'स्वभू' ग. पाठः.

**कलहंसिका** - (सस्मितम्) (क) पिअसहि ! रम्भामग्गं अणुसरदु होदी ।

**प्रभावती** -- (ख) हला ! अदीसन्तो जणो कहं अहिसरिदव्वो ।

**कलहंसिका** -- (ग) पिअसहि ! किं विह्मरिदं 'अत्तणो विज्जाप्पहावेण वाहिरुज्जाणे पज्जुण्णं दंसेमि' त्ति अय्यभद्दणडस्स वअणम् ।

**हंसः** - यदाह देवः । तत्प्रयोगदर्शनविस्मयाक्षिप्तहृदयानामविदित एवास्माकमतीतः कालः । (परितोऽवलोक्य) अये प्रौढिमारूढा प्रदोषलक्ष्मीः । सम्प्रति हि—

ज्योत्स्नाम्भःस्नपितमिदं विभाति विश्वं
स्यन्दन्ते शशिमणिभित्तयः समन्तात् ।
स्वादिष्ठान् सुखमुपभुज्य चन्द्रपादान्
सौधाग्रस्थलमधिशेरते चकोराः ॥ २३ ॥

**वज्रणाभः**—हंस ! तर्हि वासभवनं गच्छावः ।

(निष्क्रान्ताः सर्वे)

इति तृतीयोऽङ्कः ।

---

(क) प्रियसखि ! रम्भामार्गमनुसरतु भवती.

(ख) सखि ! अदृश्यमानो जनः कथमभिसर्तव्यः.

(ग) प्रियसखि ! किं विस्मृतम् 'आत्मनो विद्याप्रभावेण बाह्योद्याने प्रद्युम्नं दर्शयामि' इत्यार्यभद्रनटस्य वचनम्.

## अथ चतुर्थोऽङ्कः ।

(ततः प्रविशति काञ्चुकीयः)

**काञ्चुकीयः** — (सनिर्वेदम्)

मूकीभवन् क्षितिपतेः परिहासगोष्ठ्यां
संमन्त्रणेषु सचिवैर्बधिरायमाणः ।
अन्तःपुरेष्वनिशमन्धवदाचरंश्च
धिक्कष्टमेष दिवसानतिवाहयामि ॥ १ ॥

अहो अतिदुस्सहता घर्मसमयस्य । सम्प्रति हि—

प्रादुर्भवन्नेव पतिर्दिनानां वमत्ययं वह्निकणान् मयूखैः ।
निदाघतप्तो निखिलानि भूतान्याशंसते वारिमयानि लोकः ॥ २ ॥

आदिष्टोऽस्मि देव्या यथा 'यदा खलु वत्सा प्रभावती मदनोत्सवमनुभूय बाह्योद्यानादागतवती, तदाप्रभृत्यस्वस्थशरीरा वर्तते । अद्य कीदृशी तस्याः समवस्थेति ज्ञात्वा समागच्छ' इति । दृष्टा च मया प्रमदवनदीर्घिकानिकटे कलहंसिकया चित्तन्यस्तसन्तापाद्विशुष्यन्ती क्रियमाणशिशिरोपचारा कमप्यवस्थाविशेषमनुभवन्ती कुमारी । अद्य खलु—

स्तनकलशयोर्न्यस्तं तापाद्विशुष्यति चन्दनं
किसलयमयी शय्या म्लानिं भजत्युपमर्दनात् ।
नवबिसलताहारो दाहादुपैति विवर्णतां
तनुरपि कृशा तस्याश्चान्द्री कलेव विभाव्यते ॥ ३ ॥

किन्निमित्तमिदमस्वास्थ्यमस्याः ।

दीर्घोष्णनिश्वसितदर्शितचित्तखेदं
तत्तादृशं कमपि सञ्जनयन् विकारम् ।
क्लिश्नाति किं नु मदनो नवयौवनां तां
किं वा निसर्गसुकुमारतनुं निदाघः ॥ ४ ॥

(निपुणं निरूप्य) तस्यास्तादृशदशाविपाकस्य न घर्मस्तावत् कारणम् । यदिदानीम्—

स्मृत्वेव यत्किमपि चेतसि मीलिताक्षी
रोमाञ्चकञ्चुकितपाण्डुरगण्डरेखा ।

स्मेरानना विसृजती मुहुरश्रुबिन्दू-
न्न्यादृशीं वपुषि कान्तिमसौ बिभर्ति ॥ ५ ॥

तदियमिदानीं मदनबाणलक्ष्मीभूतेति तर्कयामि । धन्यः स खलु युवा, यमियमवधीरितसमस्ततरुणसमाजेन हृदयेनानवरतं धारयति । (साशंसम्) अपि नाम विधिरस्या मनोरथफलं सम्पादयेत् । अथ वा तत्तादृशशीलगुणशालिन्याः प्रभावत्याः को नाम मनोरथो दुर्लभः स्यात् । यावदस्याः समवस्थामावेदयितुं देव्याः सकाशं गच्छामि । (निष्क्रान्तः)

## शुद्धविष्कम्भकः ।

---

(ततः प्रविशति प्रभावती कलहंसिका च)

**कलहंसिका** --(क) पिअसहि ! अह्माणं महन्तो खु उवआरो किदो मअणूसवेण, जत्थ हु वाहिरुज्जाणगदाहिं अह्मेहिं चिरं आलक्खिअदंसणो सो महाभाओ दिट्ठो ।

**प्रभावती** – (ख) हला ! कलहंसिए ! अय्यभद्दणडप्पसादलद्धेण इमस्स पच्चक्खमअणस्स दंसणमहूसवेण एव्व सो मअणूसवो संवुत्तो ।

**कलहंसिका** --(ग) साहु भणिअं पिअसहीए ।

**प्रभावती** -- (घ) हला ! ण सव्वो सव्वत्थ कुसलो, जं सअलकलाविअड्ढेण अय्यभद्दणडेण वि तं महाभाअं जहरूवं आलिहिदुं ण पारिदं ।

**कलहंसिका** -- (ङ) आम पिअसहि ! आम, सव्वस्स वि आकिदी आलेक्खम्मि अब्भहिअसोहा लक्खिज्जइ, इमस्स उण विवरीदा दिट्ठा ।

---

(क) प्रियसखि ! अस्माकं महान् खलूपकारः कृतो मदनोत्सवेन, यत्र खलु बाह्योद्यानगताभ्यामावाभ्यां चिरमालेख्यदर्शनः स महाभागो दृष्टः.

(ख) सखि ! कलहंसिके ! आर्यभद्रनटप्रसादलब्धेनास्य प्रत्यक्षमदनस्य दर्शनमहोत्सवेनैव स मदनोत्सवः संवृत्तः.

(ग) साधु भणितं प्रियसख्या.

(घ) सखि ! न सर्वः सर्वत्र कुशलः, यत् सकलकलाविदग्धेनार्यभद्रनटेनापि तं महाभागं यथारूपमालिखितुं न पारितम्.

(ङ) आम प्रियसखि ! आम, सर्वस्याप्याकृतिरालेख्येऽभ्यधिकशोभा लक्ष्यते, अस्य पुनर्विपरीता दृष्टा.

**प्रभावती** —(क) साहु णिरूविदं। हला! अमुणिअभावं जणं अहिलसन्ती अत्तणो वि अहं लज्जेमि।

**कलहंसिका** — (ख) पिअसहि! जाणिदो एव्व तस्स भावो।

**प्रभावती** —(ग) केरिसो।

**कलहंसिका** —(घ) जारिसो तस्सिं पिअसहीए।

**प्रभावती** —(ङ) मणोरहेण किं णाम ण सम्भाविज्जइ।

**कलहंसिका** —(च) णं अहं जहादिट्ठं एव्व भणामि।

मअणूसवम्मि ताहे अह्मासु गदासु बाहिरुय्याणम्।
विह्मअपरवसहिअओ ठाइ चिरं अणिमिसो एसो॥ ६॥

**प्रभावती** --(छ) हला! तारिसेण मअणूसवेण कस्स णाम हिअअं ण विह्माविज्जइ।

**कलहंसिका**—(ज) पिअसहि! सअं एव्व पेक्खदु होदी। तइआ खु सो पज्जुण्णो विह्मअरसणिप्फन्दपह्मराईहिं कुदूहलवसतरलमन्थरतारएहिं पहरिसहरुल्लसन्तकुडिलभूमआलएहिं हिअआणुराअपिसुणेहिं कडक्खविक्खेवेहिं कुवलइददिसाहोओ णिरन्तरुग्गअपुलअपरिभूसिदसअलसरीरो ठाविदो किं मअणूसवेण अह मम वअणेण।

**प्रभावती** —(झ) णं सहावसिद्धा तस्स ते विलासा।

---

(क) साधु निरूपितम्। सखि! अज्ञातभावं जनमभिलषन्त्यात्मनोऽप्यहं लज्जे.

(ख) प्रियसखि! ज्ञात एव तस्य भावः.

(ग) कीदृशः.

(घ) यादृशस्तस्मिन् प्रियसख्याः.

(ङ) मनोरथेन किं नाम न सम्भाव्यते.

(च) नन्वहं यथादृष्टमेव भणामि.

मदनोत्सवे तदा अस्मासु गतासु बाह्योद्यानम्।
विस्मयपरवशहृदयास्तिष्ठति चिरमनिमिष एषः॥

(छ) सखि! तादृशेन मदनोत्सवेन कस्य नाम हृदयं न विस्माप्यते.

(ज) प्रियसखि! स्वयमेव पश्यतु भवती। तदा खलु स प्रद्युम्नो विस्मयरसानिष्पन्दपक्ष्मराजिभिः कुतूहलवशतरलमन्थरतारकैः प्रहर्षभरोल्लसत्कुटिलभ्रूमहालतैः हृदयानुरागपिशुनैः कटाक्षविक्षेपैः कुवलयितदिशाभोगो निरन्तरोद्गतपुलकपरिभूषितसकलशरीरः स्थापितः किं मदनोत्सवेन अथ मम वदनेन.

(झ) ननु स्वभावसिद्धास्तस्य ते विलासाः.

**कलहंसिका** — (क) पिअसहि! तइआ तुह वि साहाविआ एव्व ।

**प्रभावती** — (ख) का णाम सा इत्थिआ, जा इमं वि एव्वं उक्कण्ठावेइ ।

**कलहंसिका**-- (ग) पिअसहि! तहविहरूवसोहग्गस्स तस्स एआरिसकन्तिसम्पआए तुए विणा का णाम उक्कण्ठाकालणं ।

**प्रभावती**-- (घ) सो किल दंसणसमए वि चिरआलुक्कण्ठिओ विअ पण्डरकिसस-रीरो लक्खिओ ।

**कलहंसिका** — (ङ) णं सवणपच्चक्खिदाए तुए पज्जूसुअहिअअस्स से किअन्तो कालो ।

**प्रभावती** — (च) हला! मइ सिणेहेण एव्व तुमं एव्वं भणासि ।

**कलहंसिका** - (छ) पिअसहि! अय्यभद्दणडेण वि मम णिवेदिआ तस्स समवत्था ।

**प्रभावती** — (ज) कहं विअ ।

**कलहंसिका** —

(झ) कादुं ण सो महइ मज्जणलेवणाइं
सोहत्थलं ण अ विलग्गइ चन्दभीदो ।
सङ्गीदअं ण अ सिलाहइ किं बहूहिं
सव्वं वि णिन्दइ तुमं हिअए वहन्तो ॥ ७ ॥

**प्रभावती** — (स्वगतम्) (ञ) हिअअ! दाणिं तुए समस्ससिदव्वं । (प्रकाशम्) हला! कलहंसिए! किं तस्स महाभाअस्स पुणो दंसणमहूसवो लद्धो भवे ।

---

(क) प्रियसखि! तदा तवापि स्वाभाविका एव.
(ख) का नाम सा स्त्री, यमसप्येवमुत्कण्ठयति.
(ग) तथाविधरूपसौभाग्यस्य तस्यैतादृशकान्तिसम्पदा त्वया विना का नामोत्कण्ठाकारणम्.
(घ) स किल दर्शनसमयेऽपि चिरकालोत्कण्ठित इव पाण्डरकृशशरीरो लक्षितः.
(ङ) ननु श्रवणप्रत्यक्षितया त्वया पर्युत्सुकहृदयस्यास्य कियान् कालः.
(च) सखि! मयि स्नेहेनैव त्वमेवं भणसि.
(छ) प्रियसखि! आर्यभद्रनटेनापि मम निवेदिता तस्य समवस्था.
(ज) कथमिव.
(झ) कर्तुं न स इच्छति मज्जनलेपनानि सौधस्थलं न च विलगति चन्द्रभीतः ।
सङ्गीतकं न च श्लाघते किं बहुभिः सर्वमपि निन्दति त्वां हृदये वहन् ॥
(ञ) हृदय! इदानीं त्वया समाश्वसितव्यम्.
सखि! कलहंसिके! किं तस्य महाभागस्य पुनर्दर्शनमहोत्सवो लब्धो भवेत्.

**कलहंसिका** – (क) पिअसहि! अइरा एव्व तं दक्खिस्सह्म, 'जदो एत्थ कमलिणीतीरलदामण्डवम्मि पज्जुण्णं आणइस्सं' ति अय्यभद्दणडेण मे कहिअं।

**प्रभावती** — (सप्रार्थनमात्मगतम्) (ख) अवि णाम मह हिअअसञ्जीवणं सो महाभाओ एत्थ समागदो होज्ज।

(ततः प्रविशति कामयमानावस्थः प्रद्युम्नो भद्रनटश्च)

**प्रद्युम्नः** – (सस्मरणं सौत्सुक्यञ्च)

अद्यापि मानसमनन्यपरं मदीयं
तस्मै प्रयोगविधये स्पृहयत्यतीव।
तां यस्तदा मम हि दर्शयति स्म कान्तां
त्रैलोक्यसंवननशक्तिमिवात्मयोनेः ॥ ८ ॥

**भद्रनटः** — कुमार! तदा किल प्रेक्षामण्डपे नलकूवरवेषधारिणस्तां हृदयवल्लभां चिराय पश्यतस्तवैव केवलं चक्षुश्चरितार्थमासीत्, बाह्योद्याने पुनः परस्परदर्शनमहोत्सवमनुभवतोरुभयोरपि वाम्।

**प्रद्युम्नः** — तदानीमपि ममैवेति कथनीयम्।

बाह्योद्याने सह परिजनैस्तत्र सङ्क्रीडमाना
दृष्टा मध्ये दनुजसुदृशामुत्सवव्यापृतानाम्।
पश्यन्ती मां परिचितमिव स्नेहपर्याकुलाक्षी
सा मे सम्प्रत्यपि सुवदना चक्षुषोः सन्निधत्ते ॥ ९ ॥

**भद्रनटः** – ननु सुमहानेव परिचयः कुमारेण सह प्रभावत्याः –

गुणेषु दृष्ट्वा प्रथमं श्रुतेषु पश्चादसौ चित्रपटे भवन्तम्।
अजस्रमन्तर्मदनातुराङ्गी दधाति दैत्याधिपतेस्तनूजा ॥ १० ॥

**प्रद्युम्नः** – भद्र! अहमपि तामेव मनसि कुर्वाणः कथञ्चपि जीवितं धारयामि। (मदनाकूतमभिनीय) अहो विपर्यस्यन्ति भावाः कामयमानानाम्। तथा हि—

हुताशनति मे पतन् वपुषि हन्त चन्द्रातपः
शनैः क्रकचति स्पृशन् कमलिनीतरङ्गानिलः।

---

(क) प्रियसखि! अचिरादेव तं द्रक्ष्यावः, यतः 'अत्र कमलिनीतीरलतामण्डपे प्रद्युम्नमानेष्यामि' इत्यार्यभद्रनटेन मे कथितम्.

(ख) अपि नाम मम हृदयसञ्जीवनं स महाभागोऽत्र समागतो भवेत्.

विहारशुकमण्डलः श्रवणशूलति व्याहरं-
स्तथा विषसमर्पणत्यहह चन्दनालेपनम् ॥ ११ ॥

**भद्रनटः** – अमी तावल्लब्धदयितासमागमे त्वयि स्वभाव एव स्थास्यन्ति ।

**प्रद्युम्नः** – क्वेदानीं मदीक्षणचकोरचन्द्रिका सा भवेत् ।

**भद्रनटः** – कलहंसिकामुखसङ्क्रान्तेन मद्वचनेन सा प्रभावती प्रमदवनदीर्घिका-तीरवर्तिसङ्केतलतामण्डपमधितिष्ठति । तावत् तत्र गच्छावः ।

**प्रद्युम्नः** – (सोत्कण्ठम्)

कर्णे सुधां चक्षुषि कौमुदीं तां
चित्ते च जीवातुमहं मृगाक्षीम् ।
पश्यामि भूयोऽप्यधुनैव गाढं
मज्जामि सम्मोदमहाम्बुराशौ ॥ १२ ॥

**भद्रनटः** -- इदं तत् प्रमदवनं, यावत् प्रविशावः ।

**प्रद्युम्नः** – (स्पर्शसुखमभिनीय)

असौ वर्षन्नारात् कुमुदसरसीशीकरलवान्
लतादोलारूढाः किमपि चलयन् षट्पदवधूः ।
अनङ्गार्तैरङ्गैरहह दयिताश्वाससुरभिः
परिष्वक्तुं *शक्यं प्रमदवनपर्यन्तपवनः ॥ १३ ॥

(प्रवेशं नाटयतः)

**भद्रनटः** – (पुरो निर्दिश्य) इयमत्र वज्रणाभनन्दिनी कलहंसिकया किमपि मन्त्रय-माणा तिष्ठति । यावदिहैव स्थित्वानयोर्विस्रम्भजल्पितान्याकर्णयावः ।

**प्रद्युम्नः** – तर्हि लतान्तर्हितौ भवावः ।

**भद्रनटः** – (सस्मितम्) अहो कुमारस्य मदनपारवश्यम् –

तिरस्करण्या प्रच्छन्नमात्मानं नावगच्छति ।
न किञ्चिदपि पश्यन्ति रागान्धमनसो जनाः ॥ १४ ॥

**प्रद्युम्नः** — (लज्जां नाटयन्नग्रतो निर्वर्ण्य सहर्षम्)

इयमिह मदनकृशाङ्गी परिणतशरकाण्डपाण्डुरच्छाया ।
पुष्णाति कुतुकमक्ष्णोः शाणोल्लिखितेव मौक्तिकशलाका ॥ १५ ॥

---

* शक्यमित्यव्ययं सुबन्तप्रतिरूपकम् , प्रमदवने प्रियायाः सन्निधानात् तत्पर्यन्तपव-नस्य प्रद्युम्नं प्रति सुखस्पर्शत्वं बोध्यम् .

**प्रभावती** — (सनिर्वेदम्) (क) हला ! कलहंसिए ! जइ दाणिं एव्व ण होन्तं तस्स दंसणं, तदो सहस्सहा दलन्तं मह हिअअं।

**प्रद्युम्नः** — कः स महाभागः, यमेषाप्येवमुत्कण्ठते ।

**भद्रनटः** — कोऽन्यः कुमारात् ।

**कलहंसिका** — (सोत्प्राशम्) (ख) पिअसहि ! जइ एव्वं, सुलहं एव्व चित्तगअस्स तस्स दंसणं ।

**प्रभावती** – (ग) सहि ! सच्चं अभिहिअं —

सङ्कप्पतूलिआए राअं सङ्गमिअ दूरपरिसह्णं ।
कुसुमाउहेण लिहिअं सइ तं पेक्खामि चित्तफलअम्मि ॥ १६ ॥

**प्रद्युम्नः** – अहो प्रियतमैकतानता प्रभावत्याः ।

**भद्रनटः** – ननु प्रद्युम्नैकतानतेति वक्तव्यम् ।

**प्रद्युम्नः** – पक्षपात एव मयि भवन्तमेवं व्यवहारयति । तदद्यैव ज्ञास्यति भवान् ।

**कलहंसिका** – (घ) पिअसहि ! जंसच्चं पज्जुण्णमअं तुह हिअअं ।

**भद्रनटः** – कुमार ! किमद्यापि ते सन्देहः ।

**प्रद्युम्नः** – अतिमानुषकान्तिसम्पत्तिरेषा कथं दृज्यत्यस्मादृशेष्वित्यसम्भावनैव मे निदानं संशयस्य ।

**प्रभावती** – (ङ) हला ! अज्ज मअणसरणिसङ्गीभूदहिअआ अत्ताणं पि ण पारेमि धारेदं ।

**कलहंसिका** – (च) पिअसहि ! खणमेत्तं पडिवालेदु होदी । अह्मासु एक्कन्तपक्खपडिदो अय्यभद्दणडो तं महाभाअं पज्जुण्णं एत्थ उवणीअ दाणिं एव्व तुह मणोरहं पूरइस्सदि ।

---

(क) सखि ! कलहंसिके ! यदीदानीमेव न भवेत्तस्य दर्शनं, ततः सहस्रधा दलेन्मम हृदयम्.

(ख) प्रियसखि ! यद्येवं सुलभमेव चित्तगतस्य तस्य दर्शनम्.

(ग) सखि ! सत्यमभिहितम् —

सङ्कल्पतूलिकया रागं सङ्गमय्य दूरपरिश्लक्ष्णम् ।
कुसुमायुधेन लिखितं सदा तं पश्यामि चित्तफलके ॥

(घ) प्रियसखि ! यत्सत्यं प्रद्युम्नमयं तव हृदयम्.

(ङ) सखि ! अद्य मदनशरनिषङ्गीभूतहृदयात्मानमपि न पारयामि धारयितुम्.

(च) प्रियसखि ! क्षणमात्रं प्रतिपालयतु भवती । अस्मास्वेकान्तपक्षपतित आर्यभद्रनटस्तं महाभागं प्रद्युम्नमत्रोपनीयेदानीमेव तव मनोरथं पूरयिष्यति.

**प्रद्युम्नः** – अनेन कलहंसिकावचनेन संशयान्निवर्तितास्मि । (अग्रतो दृष्ट्वा) अद्य पुनर्जीवितसंशयः समापतितः । पश्य—

विकिरन् किरणैर्विषस्फुलिङ्गान्
विदधानो बलवैभवं स्मरस्य ।
अपमृत्युरयं वियोगभाजां
हरिणाङ्कः प्रथमादुदेति शैलात् ॥ १७ ॥

**भद्रनटः** -- कुमार ! कुलगुरुस्ते चन्द्रमाः साम्प्रतमानुकूल्यमिवाचरति । तथा हि –

हरति तिमिरमाराद्क्षिसंरोधकं ते
प्रकटयितुमिवायं दानवाधीशपुत्रीम् ।
परिमलमिव दातुं गन्धवाहोपनेयं
दलयति च कराग्रैर्दीर्घिकाकैरवाणि ॥ १८ ॥

**प्रद्युम्नः** -- तदा खल्वयमनुकूलः, अमुष्यैव यदा मम समागमः प्रेयस्याः । सम्प्रति हि—

अन्तः कलङ्कमपदिश्य वहन् विषाद-
मापाण्डुरच्छविरसौ परिधूसराङ्गः ।
कृच्छ्रादतीत्य दिवसं समुपोढरागो
दिष्ट्या समेत्य रमते निशया शशाङ्कः ॥ १९ ॥

**भद्रनटः** -- यावदद्यैव भवानपि प्रियया सङ्गच्छते ।

**प्रभावती** -- (क) हला ! एस कालो मम जीविअस्स कालो समुवट्ठिओ,
विरइअकुमुउल्लासो जोह्णालच्छीए पप्फुरन्तीए ।
पज्जुण्णो विअ चन्दो जस्सिं मह एव्व कुणइ सन्दावं ॥ २० ॥

**कलहंसिका** -- (ख) पिअसहि ! दुवे वि झत्ति एव्व तुह णिव्वुदिअरा भविस्सन्ति ।

**प्रभावती** -- (ग) कहं मम मन्दभाआए इदं भवे । (तापातिशयं नाटयन्ती संस्कृतमाश्रित्य)

---

(क) सखि ! एष कालो मम जीवितस्य कालः समुपस्थितः,
विरचितकुमुदोल्लासो ज्योत्स्नालक्ष्म्या प्रस्फुरन्त्या ।
प्रद्युम्न इव चन्द्रो यस्मिन् ममैव करोति सन्तापम् ॥

(ख) प्रियसखि ! द्वावपि झटित्येव तव निर्वृतिकरौ भविष्यतः.

(ग) कथं मम मन्दभागत्स्या इदं भवेत्.

अमी शीताः स्वभावेन जगदाह्लादनाः सुखाः ।
दहन्ति मम गात्राणि किन्नु चन्द्रगभस्तयः ॥ २१ ॥

किञ्च

प्रकृत्या शीतलो वायुर्नानापुष्परजोवहः ।
दावानलसदृक्षो मां दहतीत्यद्भुतान्तरम् ॥ २२ ॥

(इति दीर्घमुष्णं च निश्वस्य मूर्च्छां नाटयति)

**कलहंसिका**-- (क) हद्धि हद्धि अइभूमिं गदो से मअणसन्दावो । हला ! समस्ससिहि समस्ससिहि । (इति नाट्येन शिशिरोपचारं करोति)

**भद्रनटः**-- (ससंभ्रमम्) कुमार ! किं विलम्बसे । सपदि समाश्वासय तावदिमामात्मसन्दर्शनेन । अद्य खल्वमुष्याः—

लाजस्फोटं स्फुटति कुचयोर्हन्त मुक्ताकलापः
क्लृता शय्या नवकिसलयैर्भस्मभूयं प्रयाति ।
शोषं गच्छत्यलघु हृदये न्यस्तमौशीरमम्भ-
स्तस्यास्तापं शमयितुमलं त्वद्भुजाश्लेष एव ॥ २३ ॥

**प्रभावती**-- (समाश्वस्य) (ख) सहि ! अलं इमिणा उद्दीविअमअणसंज्वरेण सिसिरोवआरविहिणा ।

**कलहंसिका**-- (सखेदम्) (ग) को एत्थ पडिआरो भवे ।

**प्रभावती**-- (घ) णत्थि मे हदासाए अण्णो मरणादो, जं दाणिं तस्सिं दुल्लहम्मि जणे उक्कण्ठिअहिअअं मं पञ्चेहिं वि सरेहिं मअणो पहरइ ।

**प्रद्युम्नः**-- (तिरस्करणीमपनीय सहसोपसृत्य)

अयथार्थमेव मन्ये प्रणयिनि ! मदनस्य पञ्चबाणत्वम् ।
निपतन्ति मम शरीरे शतं शतं सायकास्तस्य ॥ २४ ॥

**प्रभावती**-- (विलोक्य ससम्भ्रममुत्थातुमिच्छति)

---

(क) हा धिक् हा धिग् अतिभूमिं गतोऽस्या मदनसन्तापः । सखि ! समाश्वसिहि समाश्वसिहि.
(ख) सखि ! अलमनेनोद्दीपितमदनसंज्वरेण शिशिरोपचारविधिना.
(ग) कोऽत्र प्रतीकारो भवेत्.
(घ) नास्ति मे हताशाया अन्यो मरणाद्, यदिदानीं तस्मिन् दुर्लभे जने उत्कण्ठितहृदयां मां पञ्चभिरपि शरैर्मदनः प्रहरति.

**प्रद्युम्नः** – अयि! मुग्धे! अलमलमायास्य दुस्सहतापकर्शितानि स्वभावसुकुमाराण्यङ्गानि ।

**भद्रनटः** – (तिरस्करिण्यपनयनाटितकेन पुरतः स्थित्वा) अपि कुशलं कलहंसिकाद्वितीयायाः प्रद्युम्नसुकृतपरिणतेः ।

**कलहंसिका** -- (सहर्षम्) (क) कहं एस अणब्भवरिसो । अवि सागदं अय्यभद्दणडसहअरस्स पहावदीमणोरहस्स ।

**प्रद्युम्नः** -- अद्य खलु भवत्योर्दर्शनेन ।

**कलहंसिका** -- (ख) इदं पल्लवासणं अलङ्करिज्जउ ।

(उभावुपविशतः)

**प्रभावती** -- (लज्जावनतमुखी तिष्ठति)

**प्रद्युम्नः** -- (साभिलाषम्)

रमणीयैर्गुणैः क्रीतं तव दानवनन्दिनि! ।
पद्मकान्तिमुषा दृष्ट्या पश्य दासमिमं जनम् ॥ २९ ॥

**प्रभावती** -- (स्वगतम्) (ग) दंसणं विअ वअणं वि से महाभाअस्स महुरं ।

**कलहंसिका** -- (घ) वअस्स! एसा खु दिट्ठीए णिमेसप्पच्चूहं असहन्ती हिअएण तुमं पेक्खइ एव्व ।

**भद्रनटः** -- साधु कलहंसिके! साधु ।

**प्रभावती** -- (सरोषम्) (ङ) हला! असम्बद्धप्पलाविणि! इदो अवसर तुमं ।

**भद्रनटः** -- (सोत्प्राशम्) अयि! मुग्धे! कुप्यतु भवती निजायैव देहाय ।

अयमानन्दजैर्बाष्पैः पुलकैश्च निरन्तरैः ।
अन्तर्गूढां तवावस्थामावेदयति नः स्वयम् ॥ २६ ॥

**प्रभावती** -- (च) कहं अय्यो वि कलहंसिआमग्गं अणुसरइ ।

---

(क) कथमेष अनभ्रवर्षः । अपि स्वागतमार्यभद्रनटसहचरस्य प्रभावतीमनोरथस्य.

(ख) इदं पल्लवासनमलंक्रियताम्.

(ग) दर्शनमिव वचनमप्यस्य महाभागस्य मधुरम्.

(घ) वयस्य! एषा खलु दृष्टेः निमेषप्रत्यूहमसहमाना हृदयेन त्वां पश्यत्येव.

(ङ) सखि! असम्बद्धप्रलापिनि! इतोऽपसर त्वम्.

(च) कथमार्योऽपि कलहंसिकामार्गमनुसरति.

**भद्रनटः** --

गौरीव चन्द्रचूडं कमलेव हरिं शचीव पुरुहूतम् ।
प्रद्युम्नमेत्य दयितं चिरमिह कालं रमस्व रम्भोरु ! ॥ २७ ॥

**प्रभावती** -- (क) अय्य ! तं भणाहि, जं जुज्जइ गुरुजणपरतन्ताणं कुलकण्णआणं ।

**कलहंसिका** - (ख) णं एस तुह गुरु एव्व अय्यभद्दणडो, ता इमस्स वअणं अणुचिट्ठ ।

**भद्रनटः** -- युक्तमेवाभिहितं मया । यतः --

परस्परप्रेमनिबद्धचेतसः
समानशीलान्वयरूपसम्पदः ।
विवाहमाहुर्मिथुनस्य सूरयः
कुमारि ! गान्धर्वमवद्यवर्जितम् ॥ २८ ॥

**प्रभावती** -- (अपवार्य) (ग) सहि ! अलङ्घणिज्जं खु अह्माणं अय्यस्स वअणं ।

**कलहंसिका** -- (घ) अहइं । किञ्च सुणिज्जन्ति पुराणेसु गन्धव्वविवाहपरिणीदाओ बहवीओ कण्णआओ ।

**भद्रनटः** - भोः कुमार !

इदमिह लतागेहं वैवाहिकं तव मण्डपं
मधुकरकुलारावो मङ्गल्यदुन्दुभिनिस्वनः ।
तरुभिरभितः कीर्णो लाजाञ्जलिः कुसुमोत्करः
स्मरहुतवहः साक्षी पाणौ करोतु भवानिमाम् ॥ २९ ॥

(इति प्रद्युम्नस्य पाणौ प्रभावत्याः पाणिमपर्यति)

**प्रद्युम्नः** -- (सहर्षोल्लासम्) यथाह भवान् (इति गृहीत्वा स्पर्शसुखमभिनीय)

स्पर्शोऽयमायताक्ष्याः सर्वाङ्गीण इव चन्दनालेपः ।
शिशिरयति साम्प्रतं मे मदनज्वरकर्शितानि गात्राणि ॥ ३० ॥

---

(क) आर्य ! तद् भण, यद्युज्यते गुरुजनपरतन्त्राणां कुलकन्यकानाम्.

(ख) नन्वेष तव गुरुरेवार्यभद्रनटः, तदस्य वचनमनुतिष्ठ.

(ग) सखि ! अलङ्घनीयं खल्वस्माकमार्यस्य वचनम् .

(घ) अथकिम् । किञ्च श्रूयन्ते पुराणेषु गान्धर्वविवाहपरिणीता बह्व्यः कन्यकाः,

**प्रभावती** – (स्वगतम्) (क) अम्महे दाणिं अमुअसाअरणिमग्गं विअ मम हिअअं कं पि दसं अणुभवइ ।

**कलहंसिका** – (ख) वअस्स! दाणिं विअ सव्वदा तुए णीसामण्णं एसा बहुमं[1]ण्णिज्जउ ।

**प्रद्युम्नः** -- किमिदं प्रार्थ्यते ।

सुकृतैरेव लब्धा ग्रास्त्वत्सख्याः कलहंसिके! ।
अद्य प्रभृति यत्सत्यमाज्ञाकरमवेहि माम् ॥ २१ ॥

(उभे परस्परमवलोक्य हर्षं नाटयतः)

**भद्रनटः** -- (सदृष्टिक्षेपम्) अयि! कलहंसिके! साम्प्रतमनयोर्वधूवरयोर्मङ्गलाचरणविधानर्थं गच्छावः.

**कलहंसिका** -- (ग) जुज्जइ । (इत्युभौ निष्क्रान्तौ)

**प्रभावती** -- (घ) कहं मं एआइणीं उज्झिअ गदा एव्व । (इति प्रस्थिता)

**प्रद्युम्नः** -- अलमावेगेन ।

परिचर्यैकपरस्ते सविधे तन्वाङ्गि! तिष्ठति जनोऽयम् ।
स्तनभारवहनखिन्नं कथमिह गमनेन खेदयसि मध्यम् ॥ ३२ ॥

(इति बलादेनां निवर्तयति)

**प्रभावती** -- (ङ) अय्य! विअड्ढमहिलाजणसमुइदेहिं वअणेहिं कित्ति मुद्धसहावं मं पआरेसि । मुञ्च दाव । अहं खु पिअसहिं अणुसरिस्सं ।

**प्रद्युम्नः** -- (सानुनयम्)

तावत् तिष्ठतु भवती साध्वसमपहाय तन्वाङ्गि! ।
यावद् भवामि धन्यः पीत्वा स्वैरमधरामृतरसं ते ॥ ३३ ॥

(इति मुखमस्याः समुन्नमयितुमिच्छति)

---

(क) अहो इदानीममृतसागरनिमग्नमिव मम हृदयं कामपि दशामनुभवति.
(ख) वयस्य! इदानीमिव सर्वदा त्वया निस्सामान्यमेषा बहुमान्यताम्.
(ग) युज्यते.
(घ) कथं मामेकाकिनीमुज्झित्वा गतावेव.
(ङ) आर्य! विदग्धमहिलाजनसमुचितैर्वचनैः किमिति मुग्धस्वभावां मां प्रतारयासि । मुञ्च तावत् । अहं खलु प्रियसखीमनुसरिष्यामि.

---

१. 'माणिज्ज' ग-पाठः.

(नेपथ्ये)

(क) इदो इदो अय्यो ।

**प्रभावती** -- (ख) (श्रवणनाटितकेन नेपथ्याभिमुखमवलोक्य ससम्भ्रमम्) एसो दाणिं अम्बाए कञ्चुई वरदक्खो कलहंसिआए उवदिट्ठमग्गो इदो एव्व आअच्छइ । जाव लदागुम्मन्तरिदो चिट्ठदु भवं ।

**प्रद्युम्नः** -- (तथा करोति)

(ततः प्रविशति कलहंसिकोपदिष्टवर्त्मा कञ्चुकी)

**कञ्चुकी** -- विजयतां कुमारी । अपि सह्या वेदना ।

**कलहंसिका** -- (ग) अत्थि दाणिं को वि विसेसो ।

**कञ्चुकी** -- कुमारि! अद्य भवतीमस्वस्थशरीरां द्रष्टुमिच्छति देवी । तदागम्यताम् ।

**प्रभावती** -- (घ) हला! किं करोमि, जाव अम्बासआसं गच्छामो । (इत्युत्थाय साञ्जलिबन्धम्) भो माहवीलआमण्डव! तुमं सव्वदा मे एव्वं सन्दावहरो होहि । (कलहंसिकाकञ्चुकिभ्यां सह दुःखेन निष्क्रान्ता)

**प्रद्युम्नः** -- (सविषादम्) 'श्रेयांसि बहुविघ्नानी'ति सत्यमिदं सूक्तं—

दयितासमागमसुखं कथमपि दैवेन मम निर्विशतः ।
प्रत्यूहहेतुरासीद् देव्याः प्रतिहारपालोऽयम् ॥ ३४ ॥

(चिन्तां नाटयन् सोत्कण्ठम्)

व्रीडानम्रं प्रमदविवशं विस्मयोत्फुल्लतारं
दृष्टिं नीलोत्पलदलमयीं निर्मिमाणं दिशासु ।
रागाविष्टं स्फुरति हृदि मे लग्नमम्भोरुहाक्ष्या
दृष्टं तस्याश्चिरपरिचितस्निग्धमाकेकराक्षम् ॥ ३५ ॥

यावदस्याः पुनः समागमाय भद्रनटसकाशमेव गच्छामि । (निष्क्रान्तः)

## इति चतुर्थोऽङ्कः ।

---

(क) इत इत आर्यः.

(ख) एष इदानीमम्बायाः कञ्चुकी वरदक्षः कलहंसिकयोपदिष्टमार्ग इत एवागच्छति । यावल्लतागुल्मान्तरितस्तिष्ठतु भवान्.

(ग) अस्तीदानीं कोऽपि विशेषः.

(घ) सखि! किं करोमि, यावदम्बासकाशं गच्छामः । भो माधवीलतामण्डप! त्वं सर्वदा मे एवं सन्तापहरो भव.

## अथ पञ्चमोऽङ्कः ।

(ततः प्रविशति भद्रनटः)

**भद्रनटः**—(सविमर्शम्) प्रायेण कार्याधीनं रम्यत्वमरम्यत्वं च कालस्य । कुतः—

दैत्याधिपस्य सुरलोकजयोद्यतस्य खेदं तदा जनयति स्म पयोदकालः ।
तन्नन्दिनीं रमयतः पुनरेष एव सौख्यावहः समजनिष्ट यदूद्वहस्य ॥ १ ॥

तथा हि कुमारः—

कदाचन स निर्विशन् प्रमुदितः कदम्बानिलान्
कदापि घनगर्जितं निशमयन् परीरम्भदम् ।
कदाचन विलोकयन् गृहशिखण्डिनां ताण्डवं
क्षणार्धमिव कान्तया क्षपयति स्म वर्षाः सुखम् ॥ २ ॥

(सपरितोषम्) समाप्तप्रायमेवास्मदनुष्ठेयम् । तयोस्तावत्तैस्तैरुपायैः सङ्घटितयोः परस्परानुरागपराधीनहृदययोः प्रभावतीप्रद्युम्नयोर्निर्विघ्नं यौवनफलानुभवो वर्तते । सङ्गमिते च प्रभावतीमुखेन कुमाराभ्यां गदसाम्बाभ्यां वज्रणाभसोदर्यस्य सुनाभस्य दुहितरौ चन्द्रवतीगुणवत्यौ । त्रिभुवनहृदयशल्यस्य वज्रणाभस्य वध एव साम्प्रतमवशिष्यते । (स्मृतिमभिनीय) एवं हि सन्दिष्टं स्वामिना वासुदेवेन—'यदा किल वज्रणाभः स्वर्गविजयाय समुद्युङ्क्ते, तदा कुमारेण हन्तव्यः । मयापि तत्र सन्निधातव्यम् । अतस्तत्समुद्योगो मम निवेद्यतामि'ति । अतीतश्चाद्य दानवपतेरमरलोकयात्राप्रत्यूहो घनसमयः, यदिदानीम्—

आख्यानपङ्कपथमम्बुलसत्तटाक-
माविर्मदद्विपमयत्नविलङ्घ्यसिन्धु ।
आदर्शयन् स्वमिह वैभवमाहवोत्कान्
सन्नाहयत्यवनिपान् शरदेष कालः ॥ ३ ॥

(साशङ्कम्) अद्य सुरलोकविजयोद्योगिनं वज्रणाभं जिघांसुः सपरिकरः कुमारः प्रकटसञ्चारो वर्तते । अयमेवं वर्तमानो दानवपतिना यदि कदा-

चिदुपलभ्येत तदा सुमहान् व्यतिकरः सञ्जायेत । तदिमं वृत्तान्तं देवाय देवकीनन्दनाय विज्ञापयामि । (इति निष्क्रान्तः)

शुद्धविष्कम्भः ।

———

(ततः प्रविशत्याकाशयानेन कृष्णो नारदश्च)

**कृष्णः**—ततस्ततः ।

**नारदः**—ततः प्रकटसञ्चारिणं कुमारमन्तःपुररक्षिणां मुखाद् रजन्यामुपश्रुत्य क्रोधान्धकारितमनसा वासभवनगतेन वज्रणाभेन तन्निग्रहाय समादिष्टं सैन्यम् ।

**कृष्णः**—ततस्ततः ।

**नारदः**—ततश्च—

मुसलशूलपरश्वधमुद्गरप्रमुखशस्त्रभयङ्करपाणयः ।
निरगमन् भवदात्मजनिग्रहग्रहजुषो दनुजेश्वरकिङ्कराः ॥ ४ ॥

**कृष्णः**—(साशङ्कम्) ततस्ततः ।

**नारदः**—ततश्च—

दनुजनिधनशङ्कादीनचित्तां स्वकान्तां
सरसमथ वचोभिः सान्त्वयन् प्रेमनिघ्नाम् ।
कथमपि तदनुज्ञां प्राप्य खड्गैकमित्रो
रणविहरणकाङ्क्षी निर्गतो रौक्मिणेयः ॥ ५ ॥

**कृष्णः**—हन्त महदिदमातङ्कस्थानम् । ततस्ततः ।

**नारदः**—ततश्च प्रवृत्ते सङ्ग्रामे—

चिच्छेद बाहून् केषांचित् केयूरवलयोज्ज्वलान् ।
सकुण्डलानि चान्येषां शिरांसि यदुपुङ्गवः ॥ ६ ॥

**कृष्णः**—तर्हि कलहकुतुकिनस्ते महान् सन्तोषः ।

**नारदः**—(सचमत्कारम्) मधुकैटभशासन! सन्तोष इति किमुच्यते । तदा किल—

अयमधिरणदेशं कल्पिते बाणतल्पे
दलितकरटिमुक्तादत्तपुष्पोपहारे ।

मदपरवशमातैर्मर्दिताङ्गं विहङ्गै-
निशि दनुजवलौघं दीर्घनिद्रामनैषीत् ॥ ७ ॥

**कृष्णः**--किं निरवशेषितं दानवकुलं वत्सेन ।

**नारदः**--इदानीमेव निरवशेषं करिष्यते । तदानीं पुनरमुना निषूदितो भयपलायितायास्त्रिष्वेको भागस्त्रिदशरिपुसेनायाः ।

**कृष्णः**--तर्हि महामुने! वत्सस्य सकाशमविलम्बितमेव गच्छावः ।

तत्पूर्वं क्षयमवलोक्य सैनिकानां
सन्नह्येद्दनुजपतिः क्रुधा स योद्धुम् ।
उत्सिक्ताः स्वयमभिभूष्णवः परेभ्यः
सञ्जातं न खलु पराभवं सहन्ते ॥ ८ ॥

**नारदः**--साधु समर्थितम् । (पुरोऽवलोक्य) तिमिरभररुद्धदृष्टिमार्गेऽपि निशासमरे तथा विहरतः कुमारस्य दिष्ट्या प्रभातं समुपस्थितम् । अद्य हि--

प्रहृततिमिरजालं तेजसा पाटलाभं
प्रथमगिरिसमेतं मण्डलं पश्य भानोः ।
रणभुवि हतदैत्यानीकरक्तारुणं ते
भुजगतमिव चक्रं कृष्ण! पुष्णाति हर्षम् ॥ ९ ॥

(इति परिक्रामतः)

(नेपथ्ये)

दिक्पालद्विपदर्पभञ्जनकलानिष्णातदोष्णा क्षणं
येनाधिष्ठितमामनन्ति हरितां कोणं सुरश्रेणयः ।
विश्वं मानुषशब्दशून्यमधुना कर्तुं स उत्तिष्ठते
देवो वज्रपुरेश्वरस्त्रिजगतीसम्पत्प्रियम्भावुकः ॥ १० ॥

**नारदः**--(नेपथ्याभिमुखमवलोक्य पुरो निर्दिशन्) यथाचिन्तितमेव समुपस्थितं, यदयमिदानीमहमहमिकया समुपस्थितै*रालोकशब्दमुखरमुखैः सेनापतिभिरुद्घुष्यमाणनिजानुभावः क्रोधानलरूक्षैः कटाक्षविक्षेपैर्निर्दहन्निव निखिलमपि जीवलोकं करतलकलितविविधायुधमरीचिमञ्जरीभिराकालिकी-

* आलोकशब्दो जयशब्दः

[1]म्बरमणिसम्पदमापादयन्त्या समुल्लसत्पताकया पताकिन्या कबलितदशाशो वज्रणाभः सुकल्पिताङ्गेन सरभसं समरभुवमवतरति ।

**कृष्णः**—(सबहुमानम्) भगवन्! अयमसौ समुचितमेव लक्षं वत्सस्य ।

**नारदः**—अथकिम् । अमुना पुनरधिरूढरथेन कुमारस्य पदातेरायोधनमसमञ्जसमवधारयामि ।

**कृष्णः**—महामुने! कल्पित एव वत्सस्य भुजगराजसारथिर्मनोरथगामी रथः । (अग्रतो निर्दिशन्) पश्य । अयमिदानीं वत्सः—

आबिभ्रदंसे धनुराततज्यमाबद्धतूणीरयुगापराङ्गः ।
रथं समारुह्य लसत्पताकं वीरो रसो मूर्त इवाविरस्ति ॥ ११ ॥

**नारदः**--(दृष्ट्वा सहर्षम्) इदानीमेव कुमारो दानवेन्द्रनिधनेन चक्षुषी मे सविशेषं चरितार्थयिष्यति ।

एतस्य शम्बररिपोरिह यादवेन्द्र-
कोदण्डकर्षणभवो युधि घोष एषः ।
अद्यैव दानवपतिर्वधमेष्यतीति
[2]शङ्के निवेदयितुमाश्रयति त्रिलोकीम् ॥ १२ ॥

**कृष्णः**—(समन्तादवलोक्य)

परस्परविघट्टनक्वणितकिङ्किणीजालकैः
समीरवशचञ्चलध्वजपटाञ्चलैः स्यन्दनैः ।
रणाद्भुतदिदृक्षया सपदि वत्सदैत्येन्द्रयो-
र्नभस्तलमितस्ततो निबिडयन्ति वैमानिकाः ॥ १३ ॥

**नारदः**—(निरूप्य) कथमुपक्रान्तमेव योद्धुं कुमारवज्रणाभाभ्याम् । अद्य हि—

कल्पापायभयाकुलां विदधतो ये भूर्भुवःस्वस्त्रयीं
मुच्यन्ते प्रसभावकृष्टधनुषा पत्या सुरद्वेषिणाम् ।
मध्येवर्त्म *वमत्कृशानुकणिकाः क्षिप्रं क्षुरप्रैः शितैः
शूरेणानकदुन्दुभेः शकलिताः पौत्रेण ते पत्रिणः ॥ १४ ॥

१. 'मन्धतमसस' क-ख-पाठः.

२. 'ङ्क्ते स वे' ग-पाठः.

* वमन्त्य आविर्भवन्त्यः कृशानुकणिका येभ्यस्ताः.

**कृष्णः**—(अग्रतो दृष्ट्वा) हन्त दानवपतेरङ्गकार्कश्यं, यतः—

संरूढवज्रव्रणलाञ्छनेऽस्मिन्
वक्षस्तटे वज्रपुरेश्वरस्य ।
वत्सेन वैफल्यममी प्रयान्ति
क्षिप्ताः शरा मूर्खे इवोपदेशाः ॥ १५ ॥

**नारदः**—(सहर्षम्) भोः कंसनिषूदन! पश्य सकललोकातिशायि भुजवीरायितं भवदात्मजस्य—

कुण्ठीभूतसुरासुरास्त्रविभवे गोत्राचलाधित्यका-
व्यूढे दानवराजवक्षसि जगल्लक्ष्मीविहाराङ्गणे ।
एतेन प्रहिताः पराभवममी स्वोपज्ञमातन्वते
दृप्यच्छम्बरबाहुडम्बरभिदाधौरेयधाराः शराः ॥ १६ ॥

**कृष्णः**—(अग्रतो निर्दिश्य) भगवन्! क एष पुनराकर्णकृष्टकोदण्डः क्रोध इव मूर्तः स्यन्दननिर्घोषमुखरितदिगन्तरालः सरभसमाधावति ।

**नारदः**—(विभाव्य सगौरवाद्भुतम्)

ज्यायान् बाहुपराक्रमेण वयसा वीरः कनीयानयं
भ्राता दानवभर्तुराहितजगत्क्षोभः सुनाभाह्वयः ।
दण्डः प्रेतपतेर्निपत्य यदुरस्येरण्डकाण्डायते
दम्भोलिश्च मृणालनालति रणे जम्भासुरद्रोहिणः ॥ १७ ॥

**कृष्णः**—(ससम्भ्रमम्) न खलु द्वन्द्वयुद्धप्रवृत्तयोः साहाय्यदायिनाऽनेन भवितव्यम् । अयं पुनर्वज्रणाभसमीपमुपसर्पति । तदहमपि वत्सस्य प्रत्यनन्तरीभवामि ।

**नारदः**—(सप्रमोदम्) अलमिह भवतः संरम्भेण ।

महान्तमिव पर्वतं प्रहितमास्थितो वज्रिणा
स्वचक्रमुखचीत्कृतैः श्रवणनन्दनं स्यन्दनम् ।
मृगाधिप इव द्विपं महितविक्रमप्रक्रमः
प्रतीर्ष्यति निरङ्कुशं त्वदनुजः सुनाभं गदः ॥ १८ ॥

१. 'त्यन्त' क-ख-पाठः.
२. 'तीच्छति' ग. पाठः.

**कृष्णः**--(सश्लाघम्) भगवन्! अवसरोचितममुना कृतं वत्सेन ।

**नारदः**--(सबहुमानम्)

किमेतदद्भुतं कृष्ण! गदस्य धृतिशालिनः ।
यदुवंशभुवां राज्ञामीदृशी कालयोधिता ॥ १९ ॥

**कृष्णः**--(सावेगम्) भगवन्! वत्सयोर्वज्रणाभसुनाभाभ्यां द्वन्द्वयुद्धे प्रवृत्ते हन्त साम्बमभिद्रवन्ति समरारभटीसमुद्भटास्त्रिदशरिपुसेनाभटाः ।

**नारदः**--(निर्वर्ण्य सोल्लासम्) अलमावेगेन । पश्य पश्य --

* अनन्यसामान्यदशप्रहारमैरावतं वज्रभृतोपनीतम् ।
आरुह्य साम्बः समरोद्यतानि निहन्त्यसौ दानवसैनिकानि ॥ २० ॥

**कृष्णः**--अहो महीयानस्मासु महेन्द्रस्य पक्षपातः ।

**नारदः**--ननु स्वात्मनीति वक्तव्यम् ।

(आकर्णनमभिनीय) रोषावेशकलिवशः किमाह वज्रणाभः--'अरे अरे अनात्मज्ञ! मानुषडिम्भ! वज्रणाभं न जानासि ।

मत्तैरावणगण्डमण्डलमदासारोदयावग्रहै-
राशापालपुराङ्गनानयनयोरास्राम्बुनाडिन्धमैः ।
अद्यैव क्रियते चिरात्प्रतिभटाभावेन तृष्णोल्वणै-
र्मद्बाणैस्तव वीरपाणमुरसि प्रस्यन्दिरक्तासवे' ॥ २१ ॥

इति ।

**कृष्णः**--अहो खल्वात्मश्लाघित्वमस्य दानवहतकस्य ।

**नारदः**--(श्रवणनाटितकेन) मन्दस्मितमधुरवदनाम्बुजेन कुमारेण पुनः किमुच्यते--'अयि भो दानवापशद! किमिह विकत्थनया ।

सप्तार्चिःकणिकोत्किरैर्मम शरैः पृष्ठे भुवः पातितं
दंष्ट्राकोटिविशङ्कटास्यकुहरस्फारोच्चलच्छोणितम् ।
त्वामद्यैव विलोक्य विस्मितमतेरानन्दजैरश्रुभि-
श्चित्रा वृत्ररिपोर्दृशां दशशती तृप्तिं परामेष्यति' ॥ २२ ॥

---

* अनन्यसामान्या गजान्तरव्यावृत्ता दशसंख्याकाः प्रहाराः प्रहरणसाधनानि यस्य तम् । दशप्रहरणत्वं चास्य गजान्तरापेक्षया दन्तद्वयाधिक्यात् । गजान्तराणामष्टप्रहरणत्वमुक्तं मातङ्गलीलायां 'शुण्डावालधिदन्तैश्च चतुर्भिश्च पदैरपि । प्रहरन्ति यतस्तस्मादष्टप्रहरणा द्विपाः' इति ।

इति । (सश्लाघम्) अद्य मे चिरकालतृषितयोश्चक्षुषोरिव श्रवणयोरपि पारणा कृता कुमारेण ।

**कृष्णः**-- (परितः पश्यन्) महर्षे ! नूनमिदानीं दिव्यास्त्रसम्प्रहारप्रसक्तेन दानवराजेन तामसमस्त्रं प्रयुक्तम् । यतः—

राहुग्रस्तामवस्थां जनयदधिपतेर्वासराणामकाण्डे
कुर्वद् वीराभिसारत्वरितसुरवधूस्वैरसञ्चारसौख्यम् ।
टङ्कच्छेद्यं मृडानीपतिगलगरलश्यामलं ध्वान्तजालं
रोदोरन्ध्रं निरुन्धत् प्रसरति जनताचक्षुरायुष्यहारि ॥ २३ ॥

**नारदः**-- (समन्तादवलोक्य सहर्षम्) कुमारेण पुनः कृतप्रतिकृतकोविदेन प्रयुक्तः पावकदैवतो बाणः ।

इतः प्रहितचक्षुषा यदुकुलेश ! भाव्यं त्वया
परास्ततिमिरोदयैर्हुतवहप्रभामण्डलैः ।
अतीव महदद्भुतं वियति शारदा अप्यमी
चकासति तटिल्लतासहचरा इवाम्भोधराः ॥ २४ ॥

**कृष्णः**-- (निरूप्य) हन्त कथमिह प्रत्यस्त्रीकृतो दुरात्मना दानवेन वारुणो मार्गणः । अद्य हि—

कल्पान्तप्रथमानचण्डपवनव्याघट्टनोन्मूलित-
प्रक्षिप्तोपरिघूर्णिताञ्जनगिरिप्रत्यर्थिभूतश्रियः ।
मन्थानाचलमथ्यमानजलधिध्वानोर्जितैर्गर्जितै-
र्विश्वं काश्चन साम्प्रतं बधिरयन्त्यम्भोमुचां पङ्क्तयः ॥ २५ ॥

**नारदः**-- (सहर्षाद्भुतम्) कृष्ण ! पश्यतु भवान् साम्प्रतं कुमारेण वायव्यमस्त्रमाहूतं, यतः—

तत्तादृग्गतिरयजातघोषसम्पत्-
संवर्तोदयमतिकारिभिः समीरैः ।
क्षिप्यन्ते वियति *वरण्डानिर्विशेषं
प्रोच्चण्डैर्झटिति पयोदमण्डलानि ॥ २६ ॥

* 'वरण्डस्तृणसञ्चयः' इति वैजयन्ती ।

**कृष्णः**--(सविषादम्) अद्य दुराशयो दानवहतकः पवनाशनदैवतमस्त्रं प्रयुक्तवान्। तथा हि—

फणरत्नमरीचिमञ्जरीभि-
वियदम्भोनिधिविद्रुमाटवीभिः ।
अधुना जनयन्त्यकालसन्ध्यां
परितः पश्य शतं शतं फणीन्द्राः ॥ २७ ॥

**नारदः**--(सप्रमोदम्) स्थान एव शम्बरमथनेन धनुषि समाधायि पन्नगाशनदैवतः पत्री ।

वियदिदमधुना विलोकय त्वं
कतिचन जङ्गमकाञ्चनाद्रिकल्पाः ।
अतिचटुलमनेन सञ्चरन्ते
तव मधुसूदन! वाहनानि तार्क्ष्याः ॥ २८ ॥

**कृष्णः**--(विलोक्य सहर्षम्)

गरुडानामिह चरतां पवनैर्धुतपक्षजालसम्भूतैः ।
सन्त्रासिताः समन्ताच्चित्रं पन्नगाशनाः पलायन्ते ॥ २९ ॥

**नारदः**--(विभाव्य सभयम्) धिक् कष्टमापतितं यदिदानीं कुमारेण प्रत्यस्त्रप्रयोगचातुर्येण मोघीकृतेषु दिव्यास्त्रजालेषु द्विगुणितामर्षो बहुशः सुरासुरसमरदृष्टसारां पितामहदत्तां गदामादाय साटोपं बाहुना परिभ्रमयति ।

**कृष्णः**--(सोद्वेगम्) हन्त किमत्र भविष्यतीति पर्याकुलं मे हृदयम् ।

**नारदः**--(सविषादम्)

ज्वलितदहनरोचिर्मण्डलीदुर्निरीक्षा
प्रलयजलदगर्जाचण्डघण्टानिनादा ।
शरशतकृततादृक्सम्प्रहारे कुमारे
परिपतति गदेयं दानवेन्द्रप्रमुक्ता ॥ ३० ॥

**कृष्णः**--(सनिर्वेदम्) महर्षे! यथाशङ्कितमापतितं, यदेष वत्सः साम्प्रतं गदाभिघातविह्वलितगात्रो मूर्छानिमीलितनयनाम्बुजश्चापयष्टिमवष्टभ्य समवतिष्ठते। तदेनमासाद्य समाश्वासयामि । (इति प्रस्थातुमिच्छति)

**नारदः**-- अलमावेगेन । पश्य पश्य—

स्वयं समाश्वस्य कुमार एष
समाहितो धैर्यमहाम्बुराशिः ।
दर्पोद्धुरं दैत्यपतिं जिघांसुः
सौदर्शनं ध्यायति सम्यगस्त्रम् ॥ ३१ ॥

**कृष्णः**-- (निरूप्य सोच्छ्वासम् ) देवर्षे! साधु दृष्टं भवता, यतः—

सम्भ्रान्तैर्दाहभीत्या सपदि सुरगणैर्दूरमुन्मुक्तवर्त्मा
ज्वालाभिर्लेलिहानो मुहुरहिमरुचेर्वाजिनां चामराणि ।
दृष्टः कल्पान्तशङ्काकलुषितमतिभिर्दूरमाशागजेन्द्रैः
प्रादुर्भूतोऽन्तरिक्षे परमथनकृतप्रक्रमश्चक्रराजः ॥ ३२ ॥

**नारदः** – (दृष्ट्वा सानन्दम् )

चक्रमूर्[1]जितहुताशनोज्ज्वलं
सम्प्र[2]युक्तमिव शम्बरारिणा ।
आपतत्यहह दानवाधिपे
दृष्टिभिः सह दिवौकसामिदम् ॥ ३३ ॥

**कृष्णः** – (सहर्षाद्भुतम् ) देवर्षे! सिद्धमिदानीमस्मदभिलषितं, यदेषः –

सभयममरवर्गैरीक्षितश्चक्रधारा-
दलितहृदयमर्मग्रन्थिनिष्ठ्यूतरक्तः ।
अधिरणमधिशेते वीरशय्यां त्रिलोकी-
दुरितविलसितानां वज्रणाभः सनाभिः ॥ ३४ ॥

**नारदः** – (ससम्भ्रमम् ) इतस्तावद् दृश्यतां द्रष्टव्यम्—

दंष्ट्रादष्टाधरोष्ठं त्रिपुरहरकरोद्धूयमानत्रिशूल-
क्रूरभ्रूभङ्गजिह्मालिकमरिवदनाबद्धरूक्षाक्षिकोणम् ।
कृत्तोत्क्षिप्तं गदेन ज्वलदनलशिखोद्गारिभिः कङ्कपत्रैः
दृष्ट्योः प्रीतिं वितन्वत् पतति दिविषदां द्राक् सुनाभस्य शीर्षम् ॥

**कृष्णः** – (विलोक्य सहर्षस्मितम् ) ननु समुचितमेव ज्येष्ठपथानुवर्तनमनुजस्य ।

**नारदः**-- (अन्यतो दर्शयन् ) पश्य सैनिका अपि स्वामिगतं मार्गमनुगच्छन्ति ।

---

१. 'मुज्झित ' ग-पाठः. २. 'म्प्रमुक्त' ग-पाठः.

तथा हि—

अचलेन दैत्यपतिना प्रहितेयं वाहिनी महती ।
रणजलधिमध्यदीप्ते संक्षीणा भवति साम्बबडवाग्नौ ॥ ३६ ॥

**कृष्णः**--(सानन्दम्) महर्षे! सकलसुरासुरदुर्दमभुजशौर्यसम्पदः सानुप्लवस्य वज्रणाभस्य जेतारं गदसाम्बसहायं वत्समवलोकयन् कृतकृत्यमात्मानमवगच्छामि ।

**नारदः**--नन्वद्य सर्वेऽपि लोकाः कृतकृत्याः । (परितः पश्यन् सहर्षबहुमानम्)

समरगतकुमारोन्मुक्तघोरास्त्रधारा-
दलितविबुधशत्रोर्दर्शनाद् वज्रपुर्याः ।
अहमिह शरजातैः कृष्ण! रामात्मनस्ते
हतदशमुखसेनामद्य लङ्कां स्मरामि ॥ ३७ ॥

**कृष्णः**--भगवन्नारद! सर्वसमरसाक्षी खलु भवान् ।

**नारदः**--इदानीं महेन्द्रप्रमुखा दिवौकसः प्रहर्षपरवशमनसो विजयश्रिया स्वयंवृतं प्रद्युम्नमनुमोदन्ते । इह हि—

हृतनिपतितशीर्षं श्रृङ्गहीनाद्रिकल्पं
भुवनहृदयशल्यं युद्धभूमौ शयानम् ।
दनुजपतिममीषां पश्यतां निर्जराणां
पतति करविमुक्ता साम्प्रतं पुष्पवृष्टिः ॥ ३८ ॥

**कृष्णः**--महर्षे! वयमपि समेत्य यावद् वज्रणाभविजयिनं वत्समभिनन्दामः ।

**नारदः**--तथा कुर्मः ।

(इत्युभौ विमानावतरणं नाटयतः)

**नारदः**--(अग्रतो निर्दिशन्) देव! देवकीनन्दन! अयमिदानीं—

गदसाम्बसहायस्त्वां प्रद्युम्न उपतिष्ठते ।
सेव्यमानोऽर्थधर्माभ्यामुत्साह इव मूर्तिमान् ॥ ३९ ॥

(ततः प्रविशति यथानिर्दिष्टः प्रद्युम्नः)

**प्रद्युम्नः**--तात! गद! वत्स! साम्ब! अद्य चिरात्तातपादान् द्रक्ष्याम इति सर्वमनोरथानामुपरि वर्तामहे ।

येषां *शेषामिवाज्ञामनितरसुलभां धारयन्तः शिरोभि-
र्निर्गत्य द्वारवत्या दनुजपुरमिमामेत्य तैस्तैरुपायैः ।
भद्रेणासाद्य विद्यावितरणगुरुणा प्रापितास्तत्कुमारी-
र्हत्वाजौ वज्रणाभं सहबलमधुना हर्षयामस्त्रिलोकीम् ॥ ४० ॥

**गदः**—वत्सौ! अयमसावार्यो देवर्षिणा नारदेनास्मानभिगच्छति ।

**साम्बः**—तद् वयमपि त्वरितमेव प्रत्युद्गच्छामः ।

(इति सर्वे उपसृत्य नाट्येन कृष्णमभिवादयन्ते)

**कृष्णः**—(सर्वानुत्थाप्य परिष्वज्य च सहर्षबहुमानम्) दिष्ट्या साम्प्रतमक्षतशरीरान् विजयिनो वत्सानवलोकयामि । वत्साः! एष देवर्षिर्नारदोऽभिवाद्यताम् ।

(सर्वे तथा कुर्वन्ति)

**नारदः**—वज्रणाभमहार्णवबाडवानल! प्रद्युम्न! सुनाभकलभकण्ठीरव! गद! दनुजराजसैन्यविपिनदावदहन! साम्ब! यूयमायुष्मन्तो भूयास्त ।

(प्रविश्य पटाक्षेपेण)

**भद्रनटः**—(सप्रणामम्) देव! दिष्ट्या वर्धसे ।

प्रद्युम्नगदसाम्बानां प्रासूयन्त सुतान् प्रियाः ।
प्रभावतीचन्द्रवतीगुणवत्यः कुलोद्वहान् ॥ ४१ ॥

(सर्वे हर्षं नाटयन्ति)

**नारदः**—सत्यमिदं सूक्तं "सम्पद् सम्पदमनुबध्नाति" इति ।

**कृष्णः**—महर्षे! लब्धप्रतिष्ठमिदानीं यादवकुलम् ।

**नारदः**—जगन्नाथ! ननु वक्तव्यं त्रिभुवनं लब्धप्रतिष्ठमिति ।

**कृष्णः**—

सम्प्राप्तयौवनास्ते शस्त्रविदः शास्त्रपारदृश्वानः ।
चिरजीविनः कुमारा भूयासुर्भुवनगोप्तारः ॥ ४२ ॥

**नारदः**—तथा भवतु ।

**प्रद्युम्नगदसाम्बाः**—महान् प्रसादः ।

**कृष्णः**—भगवन्! अस्मिन् वज्रपुरे वज्रणाभविजयिनं वत्सं प्रद्युम्नमभिषेक्तुमिच्छामि ।

* शेषामिव निर्माल्यदानमिव.

**नारदः**—सर्वलोकाभिमतमभिहितं भवता । तत् किमिदानीं विलम्ब्यते ।

प्रहर्षितस्त्वं रिपुनिग्रहेण
कुरुष्व साम्राज्यजुषं कुमारम् ।
प्रायेण लोके महतां जनानां
फलावसाने भवति प्रहर्षः ॥ ४३ ॥

**कृष्णः**—अये! भद्रनट! सम्भ्रियतामभिषेकसम्भारः ।

**भद्रनटः**—देव! पूर्वमेव सम्भृतमास्ते । देवेन महेन्द्रेण प्रेषितमभिषेकोपकरणम् । अलङ्कृतां च वज्रपुरीमिमामद्यैव——

पट्टांशुकाभिवृतहर्म्यलसत्पताका-
मुत्तोरणामुपहृतागुरुधूपवासाम् ।
द्वार्वेदिमध्यगतमङ्गलदीपमाला-
रम्यां विलोकयतु दानवराजधानीम् ॥ ४४ ॥

**कृष्णः**--(विलोक्य सहर्षम्) तर्हि त्वरितमत्र सकलमप्यभिषेकोपकरणजातमानीयताम् ।

**भद्रनटः**—यदाज्ञापयति देवः । (इति निष्क्रम्य प्रविश्य च) देव! सर्वमिदमिहोपनीतम् ।

**कृष्णः**—(प्रद्युम्नमवलोक्य) वत्स! स्वास्तीर्णमिदं सिंहासनमास्थीयताम् ।

**प्रद्युम्नः**—(सविनयम्) यदाज्ञापयति तातः । (इति बद्धाञ्जलिः प्राङ्मुख उपविशति)

(कृष्णो नाट्येनाभिषिञ्चति । नेपथ्ये पुष्पवृष्ट्यनन्तरम्)

दुर्वृत्तनिग्रहमहाव्रतबद्धदीक्ष-
स्त्रैलोक्यरक्षणकृतक्षणबाहुदण्डः ।
साम्राज्यचिह्नमधितिष्ठतु भद्रपीठं
नाथो यदुक्षितिभृतां शरदः सहस्रम् ॥ ४५ ॥

**नारदः**—कृष्ण! सम्प्रति भवता कृतसाम्राज्याभिषेकं महाराजं प्रद्युम्नमभिनन्दन्ति देवाः ।

**कृष्णः**—देवर्षे! नारद! किमिदानीमत्र कर्तव्येष्ववशिष्यते ।

**नारदः**—(सहर्षं सश्लाघं च)

---

१. 'व्येऽव' क-पाठः.

नीता हर्षमयीं दशां त्रिजगती दैत्याधिपध्वंसिना
तत्पुत्रीव गुणोत्तरेण गमिता साम्राज्यलक्ष्मीर्वशम् ।
प्रायः कन्दलितश्च धर्मविटपी प्राप्ताभिषेकश्रिया
प्रद्युम्नेन तदद्य यादवपते! सर्वं हि नः साधितम् ॥ ४६ ॥

**कृष्णः**—(प्रद्युम्नमवलोक्य) वत्स! किं ते भूयः प्रियमुपहरामि ।

**प्रद्युम्नः**—तात! किमतः परमपि प्रियमस्ति । अद्य हि भवत्प्रसादमात्रेण मयापि—

समिति निहतस्तैस्तैर्दैत्याधिपः सह बान्धवैः
*प्रहितविभवं राज्यं प्राप्तं तदीयमशेषतः ।
शमितहृदयाशङ्काः क्लृप्तास्तथा सकलाः प्रजाः
किमिह बहुना सर्वं लब्धं मनोरथतां गतम् ॥ ४७ ॥

(भरतवाक्यम्) तथापीदमस्तु ।

सन्तो रत्नशतैरिवाम्बुनिधयस्तन्वन्तु सूक्तैर्मुदं
क्षीयन्तां कलिविभ्रमा इव जगत्क्लेशावतीर्णाः खलाः ।
दातारो जलदा इवानुसमयं वर्षन्त्वभीष्टं वसु
क्षोणीशाः कुलपर्वता इव महीमश्रान्तमाबिभ्रतु ॥ ४८ ॥

(सर्वे निष्क्रान्ताः)

इति पञ्चमोऽङ्कः ।

प्रद्युम्नाभ्युदयं समाप्तम् ।

---

* प्रहितविभवं प्रपुष्टवैभवम् । 'प्रथितविभवम्' इति वा पाठः स्यात् ।

# श्लोकानुक्रमणिका ।

---



# Ready for sale.

| | | | |
|---|---|---|---|
| भक्तिमञ्जरी (Stuti) by H. H. Svati Sri Râma Varma Maharajah | 1 | 0 | 0 |

---

## Trivandrum Sanskrit Series.

| | | | |
|---|---|---|---|
| No. 1 — दैवम् (Vyâkarana) by Deva with Purushakâra of Krishnalîlâsukamuni. | 1 | 0 | 0 |
| No. 2 — अभिनवकौस्तुभमाला – दक्षिणामूर्त्तिस्तवौ by Krishnalîlâsukamuni. | 0 | 2 | 0 |
| No. 3 — नलाभ्युदय: (Kâvya) by Vâmana Bhatta Bâna. | 0 | 4 | 0 |
| No. 4 — शिवलीलार्णव: (Kâvya) by Nîlakantha Dîkshita. | 2 | 0 | 0 |
| No. 5 — व्यक्तिविवेक: (Alankâra) by Mahima Bhatta. with commentary. | 2 | 12 | 0 |
| No. 6 — दुर्घटवृत्ति: (Vyâkarana) by Saranadeva. | 2 | 0 | 0 |
| No. 7 — ब्रह्मतत्त्वप्रकाशिका (Vedânta) Sadasivendrasarasvatî | 2 | 4 | 0 |
| No. 8 — प्रद्युम्नाभ्युदयम् (Nâtaka) by Ravi Varma Bhûpa. | 1 | 0 | 0 |
| No. 9 — विरूपाक्षपञ्चाशिका (Vedânta) by Virûpakshanâtha with commentary of Vidyâchakravartin. | 0 | 8 | 0 |
| No. 10 – मातङ्गलीला (Gajalakshana) by Nîlakantha. | 0 | 8 | 0 |

## IN THE PRESS.

— तपतीसंवरणम् (Nâtaka) by Kulasekhara Varma with commentary.

— परमार्थसारम् (Vedânta) by Bhagavad Âdisesha with Râghavânanda's commentary.

— नीतिसार: (Nîti) by Kâmandaka with the commentary, 'Jayamangala' of Sankarârya.